माणिकचन्द्र-दिगम्बरजैनग्रन्थमाला, तृतीय पुष्प ।

उभयभाषाकविचक्रवर्ति-श्रीहस्तिमल्लविरचितं

# विक्रान्तकौरवं

सुलोचनापरनामकम्

नाटकम् ।

पाढमनिवासि पण्डित-मनोहरलालशास्त्रिणा

संशोधितम् ।

प्रकाशिका—

माणिकचन्द्र-दिगम्बरजैनग्रन्थमालासमितिः ।

फाल्गुण, वीर नि. संवत् २४४२ ।

विक्रमाब्द १९७२ ।



# प्रस्तावना ।



## हस्तिमल्लकवेः परिचयः ।



सोऽयं समस्तजगदूर्जितचारुकीर्तिः
स्याद्वादशासनरमाश्रितशुद्धकीर्तिः ।
जीयादशेषकविराजकचक्रवर्ती
श्रीहस्तिमल्ल इति विश्रुतपुण्यमूर्तिः ॥

( अय्यपार्य. )

तद्ग्रंथकर्तुर्हस्तिमल्लेति नाम प्रथितमासीत् । अयं च गोविंदभट्टाख्यविदुषः सूनुर्दाक्षिणात्य आसीत् । गोविंदभट्टो वत्सगोत्रीयो ब्राह्मणः पूर्वमजैन आसीत्, पश्चाद्भगवत्समंतभद्रविरचितदेवागमसूत्राध्ययनेन जैनो जातः । ग्रंथस्यास्य तृतीयपृष्ठे हस्तिमल्लेन सूत्रधारमुखेनाख्यापितः "अस्ति किल सरस्वतीस्वयंवरवल्लभेन भट्टारगोविंदस्वामिसूनुना हस्तिमल्लनाम्ना महाकवितल्लजेन विरचितं विक्रातकौरवं नाम रूपकमिति" । अस्मिन् तेन कविना स्वपितृनाम्ना साकं यत् 'भट्टार' 'स्वामी' इत्येतत्पदद्वयं योजितं ताभ्यां प्रतीयते कदाचित् गोविंदभट्टः तदानीं साधुर्भट्टारको वा प्रथितः स्यात् । अन्यच्चास्यां विक्रातकौरवीयप्रशस्तौ वीरसेन-जिनसेन-गुणभद्राद्याचार्यपरंपराया उल्लेखं कृत्वा लिखितं ।

तच्छिष्यानुक्रमेयातेऽसंख्येये विश्रुतो भुवि ।
गोविंदभट्ट इत्यासीद्विद्वान् मिथ्यात्ववर्जितः ॥

अस्यां यत् गोविंदभट्टो गुणभद्रादिशिष्यपरंपराया निरूपितः अनेनापीति प्रतीयते यद् गोविंदभट्टो गृही नासीत् साधुर्भट्टारको वा स्यात् ।

अस्ति गोविंदभट्टो दक्षिणदेशनिवासी । तत्र स्वर्णयक्षीनाम्नी काचिद्देवी समाराधिता जाता । तत्प्रसादेन तस्य एतत्पट्पुत्रप्राप्तिः संजाता—१ श्रीकुमार, २ सत्यवाक्य, ३ देववल्लभ, ४ उदयभूषण, ५ हस्तिमल्ल ६ वर्द्धमानश्च । एते षडपि

कवयो विद्वांसश्च वभूवुः । हस्तिमल्लेन स्वीय-मैथिलीकल्याणनाटकस्य प्रस्तावनायां निजाग्रजः सत्यवाक्यः 'श्रीमतीकल्याण' प्रभृतिग्रंथानां कर्ता प्ररूपितः परं तु सत्यवाक्यस्येदानींतनपर्यंत कोऽपि ग्रंथो नोपलब्धः । एतेषु कुमारकविनिर्मित आत्म प्रबोधाख्यो लघुग्रंथो ईडराख्यपुरस्य सरस्वतीभवने अस्ति । स हस्तिमल्लभ्रातृश्रीकुमारस्यैव वान्यस्य कस्यापीति न प्रतीयते ।

'राजावली' कथातः ज्ञायते यत् हस्तिमल्लस्य पार्श्वपंडितादयः पुत्रा आसन् लोकपालार्याख्य एकः शिष्यश्च । अवश्यमेव तेपि विद्वांसः कवयश्च भविष्यंति किंतु तेषां विषये नाद्यापि पर्यन्तं किञ्चिद् ज्ञातम् ।

हस्तिमल्लकवेरनुजस्य वर्धमानकवेर्विषये जनानामयं विश्वासोस्ति यत्स गणरत्नमहोदधिनामकव्याकरणविषयग्रंथस्य कर्त्ता परमयं भ्रमः । ततो गणरत्नकर्ता विक्रमसंवत् ११९७ अनुमिते अर्थात् हस्तिमल्लसमयात् सार्धशतवर्षपूर्वमासीत् । किंच स गोविंदसूरेः शिष्य आसीत् अयं च गोविंदभट्टस्य सूनुः । अन्यच्च स साधुरयं च गृहस्थः । अपरं च स श्वेतांबराम्नायी प्रतीयते अयं तु दिगंबरसंप्रदायानुगोस्ति ।

गणरत्नमहोदधिकर्ता श्वेतांबर आसीत् । अस्मिन् विषयेऽनेकानि प्रमाणानि संति । पूर्वं तु तेन स्वकीयग्रंथे यत् शतश उदाहरणानि दत्तानि तानि सर्वाणि अजैनाना श्वेतांबरग्रंथकर्तृणामेव, दिगंबराणामेकमपि न दत्तं । द्वितीयं पूर्वोक्तोदाहरणेषु द्वौ श्लोकावेतादृशौ ययोः श्वेतांबराणां प्रशंसा दिगंबराणां च निंदा कृतासीत् ।

यथा वीराचार्याणाम्--

युक्तं सितांबराणां तुम्बग्रहणं कुटुंबपरिहरणं ।
कथमन्यथा तरीतुं शक्यः संसारतोयनिधिः ॥

यथा श्रीसागरचंद्रस्य-- ( गणरत्नमहोदधिः, पृष्ठ २२ )

अकल्पितप्राणसमासमागमा मलीमसांगा धृतभैक्षवृत्तयः ।
निर्ग्रंथतां त्वत्परिपंथिनो गता जगत्पते किं त्वजिनावलंबिनः ॥

( गणर. पृष्ठ १६४ )

गणरत्नमहोदधिकर्तृनिर्मितं किमपि सिद्धराजवर्णनाख्यं काव्यं वर्तते तस्मिन् चौलुक्यनरेशसिद्धराजस्य वर्णनमास्ति । एतत्काव्यस्यानेके श्लोका गणरत्नमहोदधावुदाहरणस्वरूपेणोद्धृता । अणहिल्लपुर ( पाटण ) नरेशस्य सिद्धराजस्य श्वेतांबरजैनसंप्रदाये महती कृपासीत् । अनेन प्रतीयते यत् गणरत्नमहोदधेः कर्ता गुर्जरदेशसन्निकटस्थः श्वेतांबरश्च स्यात् सिद्धराजाणहिल्लपुरप्रशंसायां कश्चिदपि दिगंबराम्नायी ग्रंथो लिखिष्यतीति न किंचित्संभावना प्रतीयते ।

साराश इत्येव यत् हस्तिमल्लस्य भ्रातुर्वर्धमानकवे. गणरत्नमहोदधिकर्तुश्च नामसाम्यं विहाय नान्यः कोपि सबंधः। अस्मिश्च विषयेऽनेकानि प्रमाणानि निरूपयितुं शक्यानि।

हस्तिमल्लो महान् प्रख्यातकवि· प्रतीयते । तस्य विरुदावल्याः प्रशंसासूचकपदेभ्य एतत्सूचितं भवति । ग्रंथेस्मिन् स स्वं सरस्वतीस्वयंवरवल्लभ, महाकवितल्लजेति निरूपितवान् । मैथिलीकल्याणस्याते स स्वीय नाम 'सूक्तिरत्नकरेति प्रथयामास । तस्याग्रजेन सत्यवाक्येन स 'कवितासाम्राज्यलक्ष्मीपतिः' इति कथयित्वा संवोधितः।

अनेन प्रतीयते हस्तिमल्ल इति कवेरिदं वास्तविकनामधेयं नास्ति।किंत्विदं तद्गुणविशेषेणैव निक्षिप्त। अस्मिन् विषये अय्येपार्यनामकविदुषा विरचिते जिनेंद्रकल्याणाभ्युदयनाम्नि ग्रंथे श्लोको दत्तः—

**सम्यक्त्वं सुपरीक्षितुं मदगजे मुक्ते सरण्यापुरे**
**चास्मिन् पाण्ड्यमहीश्वरेण कपटाद्धंतुं स्वमभ्यागते ।**
**शैलूषं जिनमुद्रधारिणमपास्यासौ मदध्वंसिना**
**श्लोकेनापि मदेभमल्ल इति यः प्रख्यातवान् सूरिभिः ॥ १६ ॥**

अनेन प्रतीयते यत् हस्तिमल्लेन हंतुमागतस्य मदमत्तहस्तिनो मदो दूरीकृतः कश्चिज्जिनमुद्राधारी धूर्तश्चैकेन श्लोकेन निर्मदीकृतः । अतस्तस्य नाम मदेभमल्लो हस्तिमल्लो वा प्रथित ।

एतन्नाटकस्य प्रथमांकेपि श्लोको वर्तते तस्मिन् कवेर्हस्तियुद्धे विजयप्राप्तेस्तन्निमित्तकपाड्यनरेश्वरद्वारा सत्कारप्राप्तेरुल्लेखोस्ति—

**श्रीवत्सगोत्रजनभूषणगोपभट्ट-**
**प्रेमैकधामतनुजो भुवि हस्तियुद्धात् ।**
**नानाकलांबुनिधिपांड्यमहेश्वरेण**
**श्लोकैः शतैस्सदसि सत्कृतवान् वभूव ॥ ४० ॥**

उपर्युक्तश्लोकद्वयेनांजनापवनंजयस्य निम्नलिखितप्रशस्तिश्लोकेन प्रतीयते यत् हस्तिमल्लः पाड्यदेशीयराज्ञः कृपापात्रोऽभूत् तद्राजधान्या च स्ववन्धुभिः सह निवासं चकार—

**श्रीमत्पाण्ड्यमहीश्वरे निजभुजादंडावलंवीकृते**
**कर्णाटावनिमंडलं पदनतानेकावनीशेऽवति ।**
**तत्प्रीत्यानुसरन्स्ववंधुविवहैर्विद्वद्भिराप्तैस्समं**
**जैनागारसमेतसंतरनमे (?) श्रीहस्तिमल्लोऽवसत् ॥**

---

१ अय्यपार्येण १३७६ विक्रमसवत्सरे जिनेंद्रकल्याणाभ्युदयस्य रचना कृता

द्रविडदेशसन्निहितस्य मदुरा ( दक्षिणमथुरा ) या' समीपस्थप्रदेशानां पाण्ड्य-देश इति नाम आसीत् । कविस्थितिसमये तत्रत्यः पाड्यमहेश्वरो नृपो बभूव । अयं सुंदरपाड्य ( प्रथम ) स्योत्तराधिकारी स्यात् । तस्य राज्यकालः १३०७ वि० संवत्सरात्प्रारंभो भवति । एनं कविः राजाधिराज-नानाकलांवुनिधीति लिखितवान् । अयं कवेर्महदादरश्चकार ।

कर्णाटककविचरितस्य कर्त्रा हस्तिमल्लकविसमयः ई. सन् १२९० अर्थात् १३४७ विक्रमाव्दो निश्चितः । अयमेव च सम्यक् प्रतीयते, यत अय्यपार्येन स्वीयजिनेन्द्र-कल्याणाभ्युदयग्रंथः १३७६ विक्रमाव्दे समाप्तिं नीतः, तस्मिंश्च हस्तिमल्लस्योल्लेखः कृतः । स चोल्लेख एतादृशो येन हस्तिमल्लस्तत्समकालीनः तस्य कविना समं साक्षात्परिचयो वा प्रतीयेत ।

हस्तिमल्लो गृहस्थ आसीत् न गृहत्यागी, एतत्कथनस्योल्लेखो नेमिचंद्रकृतप्रतिष्ठा-तिलकस्यास्मिन् श्लोके कृत'—

**परवादिहास्तिनां सिंहो हस्तिमल्लस्तदुद्भवः ।**
**गृहाश्रमी बभूवार्हच्छासनादिप्रभावकः ॥ १३ ॥**

हस्तिमल्लो महान् प्रसिद्धकवि· प्रतीयते । तस्य प्रतिभा परं तन्नाटकेभ्य अनुमीयते अधुनापर्यंतं तस्य केवलं नाटकग्रथा एव उपलब्धाः , तेष्वयमेकः प्रकाश्यते । द्वितीयो मैथिलीकल्याणरूपकग्रंथः त्वरया प्रकाशयिष्यते । तृतीय· सुभद्राहरणः चतुर्थोऽञ्जनापवनंजयश्चापि उपलब्धा आसन्, ययो प्रकाशने प्रयत्नो विधास्यते । हस्तिमल्लस्यैक आदिपुराणः पुरुचरितं वा नाम ग्रंथो **श्रीदौर्वलिशास्त्रिणां** सरस्वती-भवने वर्तते यस्मिन्नेकसहस्रानुमिताः श्लोकाः संति, परं स अस्मद्दृष्टिपथे नायात' ।

देवचंद्रकविः स्वीय 'राजावलीकथाया' हस्तिमल्लमुभयभाषाकविचक्रवर्तीति लिखितवान् । अनेन प्रतीयते यत्स संस्कृतं विहाय कनड़ीभाषायाश्च कविरासीत् एतद्भाषायां चापि तेन रचना विहिता स्यात् । कृतं पल्लवितेनेति शम् । *

हीरावाग, बम्बई
माघशुक्ला पूर्णिमा
संवत् १९७२ वि०

निवेदकः—

**मनोहरलाल शास्त्री,**

---

* श्रीयुत नाथूरामप्रेमी—जैनहितैषि सम्पादकेन हिन्दीभाषायाँ लिखितस्य लेखस्यानुवादो ऽयम् ।

# श्रीमान् सेठ सिदराम पिराजी ।

श्रीमान् सेठ सिदरामजी सतारा जिलेकी तासगाँव तहसीलके 'सावळज' नामक ग्रामके रहनेवाले हैं। आप दिगम्बराम्नायको माननेवाली कासार नामक जैनजातिके पुरुष रत्न हैं। आप बड़े ही सज्जन, धर्मात्मा और जैन-धर्मके ज्ञाता है। संस्कृत, हिंदी, कानड़ी और मराठी, भाषाके आप अच्छे जानकार है। मराठी आपकी जन्म-भाषा है। संस्कृत जैनग्रन्थोंका तो आप नित्यही स्वाध्याय किया करते है। दिगम्बर और श्वेताम्बर दोनों सम्प्रदायके ग्रन्थोंका आपने स्वाध्याय किया है। जैनधर्मके संस्कृत साहित्यको प्रकाशित करनेकी ओर आपकी बड़ी रुचि है। आप कहा करते है कि जैनोंका सबसे प्रथम कर्तव्य अपने प्राचीन साहित्यका प्रकाशित करना है। क्योंकि जैनसाहित्य ही जैनधर्मका जीवन है।

जैनसाहित्यका प्रचार करनेके लिए आपने इस ग्रन्थकी २५० प्रतियाँ लेनेकी कृपाकरके इस संस्थाको उपकृत किया है। इस ग्रन्थमालाको सहायता देनेकी आप और भी सदिच्छा रखते है। अन्य धर्मात्माओको आपका अनुकरण करना चाहिए।



श्रीमान् सेठ सिद्राम पिराजी ।

The Manoranjan Press, Bombay



नमः सिद्धेभ्यः ।

अथ श्रीमद्धस्तिमल्लकविविरचितं

# विक्रान्तकौरवं

# नाटकम् ।



अस्मिमपिमुखा वृत्तिर्येन क्षितौ प्रकटीकृता
भरतमहिपस्सम्राट् यस्यात्मजो भुवनोत्तरः ।
सुरपमकुटीकोटी–नीराजितांघ्रिसरोरुहः
प्रथमजिनपः श्रेयो भूयो ददातु मुदा सदा ॥ १ ॥

( नाद्यन्ते )

सूत्रधारः—अलमतिप्रसंगेन मारिष इतस्तावत् ।

( प्रविश्य )

पारिपार्श्वकः—भांव अयमास्मि आज्ञापयत्वार्य इति ।

---

१ भो विद्वन् ।

**सूत्रधारः**—शृणु तावत् । नानादिगन्तवास्तव्यपंडितौ[1]खण्डमण्डलमण्डितामिमां परिषदं[2] प्रार्थितवानस्मि ।

**मारिषः**—किमिति ।

**सूत्रधारः**—चिराभ्यासपल्लविता[3] मदीयनाट्यशास्त्रविद्या[4] सादरावलोकनेन सफलीक्रियतामिति ।

**मारिषः**—भाव किमर्थमियं प्रार्थना ।

**अधीतैषा विद्या क्रमत इहं पारं च गमिता**
**प्रदत्ता पात्रेषु[5] प्रथितमनसा तत्र भवता[6] ।**
**यशोमल्लीवल्लीकुसुमसुभगं चाजनि फलम्[7]**
**ततः सैषा याञ्चा[8] सपदि तव दैन्याय भवति ॥ २ ॥**

**सूत्रधारः**—मारिष सत्यमेतत् । तथापीदं श्रूयताम्—

**एतद्देहानुभाव्ये[9] प्रचुरधनचये[10] नास्ति कस्यापि तृप्तिः**
**कांतावर्गोऽपि[11] तद्वत्तरुणिमवयसा[12] केवलेनानुभाव्ये ।**
**तस्मात्संजृम्भमाणे प्रसरति च विना देशकालव्यवस्थां**
**कीर्तिस्तोमेऽभिरामे जगति कृतमतेः[13] कस्य वा स्याद्विरक्तिः ॥३॥**

किंच । अस्मदीयां नाट्यविद्यावैशद्योल्लसितां[14] कीर्तिमपहर्तुमुपाध्यायभरताचार्यपुत्रस्संततंतन्यमानासूयानिवासपदैः नटोपसदैः[15] प्रतिबोधितः स्पर्धामाटीकते, तां निर्मूलयितुं च अनितरदुस्साध्यरूपका[16]भिनयारंभसंरंभ इति ।

**मारिषः**—तर्हि युक्तैषा प्रार्थना परिषदा च किमाज्ञप्तमिति ।

---

१ विद्वच्छ्रेष्ठ । २ सभा । ३ वृद्धिंगता । ४ नाट्यशास्त्रे । ५ छात्रेषु । ६ पूज्येन त्वया । ७ प्रयोजनम् । ८ प्रार्थना । ९ स्वीकृतशरीरानुभवनयोग्ये । १० अधिकधनसमूहे । ११ स्त्रीसमूहे । १२ यौवनावस्थया । १३ प्राज्ञस्य । १४ विशदीकरणत्व । १५ नर्तकाभासैः । १६ नाटक ।

सूत्रधारः—

शृंगारवीरसारस्य गंभीरचरिताद्भुतम् ।
महाकविसमाबद्धं रूपकं रूप्यतामिति ॥ ४ ॥

मारिषः—दुर्लभं खल्वीदृशं पारिषदश्रवणलोचनासेचनकं रूपकमिति ।

सूत्रधारः—( स्मरणमभिनीय ) आः स्मृतम् । अस्ति किल सरस्वतीस्वयंवरवल्लभेन भट्टारगोविंदस्वामिसूनुना हस्तिमल्लनाम्ना महाकवितल्लजेन विरचितं विक्रांतकौरवं नाम रूपकमिति ।

मारिषः—अपि तादृशो हस्तिमल्लः ।

सूत्रधारः—

सरस्वत्या देव्या श्रुतियुगवतंसत्वमयते
सुधासध्रीचीनां त्रिजगति यदीया सुफणितिः ।
कवींद्राणां चेतःकुवलयसमुल्लासनविधौ
शरज्ज्योत्स्नालीलां कलयति मनोहारिरचना ॥ ५ ॥

किंच ।

कवींद्रोऽयं वाचा विजितनवमोचाफलरसः
सभासारज्ञाढ्या वयमपि तथा नाट्यचतुराः ।
कथाप्येषा लोकोत्तरनवचमत्कारमधुरा
तदेतत्सर्वं नः प्रकटतरभाग्येन घटितम् ॥ ६ ॥

मारिषः—वसंतसमयोप्ययं भाविस्योपकुरुते प्रचुरविकासितकुसुमशरमयः ।

सूत्रधारः—युक्तमेतत् । अहो रमणीयता कोमलकिसलयकुलविकसितवसंतस्य ।

---

१ प्रतिपाद्यता । २ परिषदि विद्यमान । ३ अतृप्तिकरं । ४ कर्णभूषणत्व । ५ सदृशा । ६ हस्तिमल्लसंबधिनी शोभनावसराणि । ७ उत्पादयति । ८ कदलीफल । ९ शास्त्रज्ञपरिपूर्णा । १० अस्माकम् । ११ सबाधित । १२ विदुष भवत सहायते ।

पुष्यच्चूतलताप्रवालकवलना[1]माद्यत्पिकोद्यत्स्वरा
वासंतीलतिकालतांत[2]विचरद्भृंगारवाडंबराः ।
फुल्ला[3]शोकसुगंधबंधुरचरन्मंदानिलस्पंदना
यूनामुत्सुकयंति मानसममी वासंतिका वासराः ॥ ७ ॥

अलमतिप्रसंगेन तद्यावदिदानीमारभ्यतां संगीतकम् ।

**मारिषः**—तेन हि किमिति विलंब्यते ( नेपथ्याभिमुखमवलोक्य ) अहो सुलोचनास्वयंवरयात्रामहोत्सवसंदर्शनाय चतुरंगबलेन सह वाराणसीं प्रस्थितेन कौरवेश्वरेण समानीतस्य[4] तत्प्रियसुहृदो विशारदस्य भूमिकामादाय रंग[6]त्तरंग इत एवाभिवर्तते । तदावामप्यनंतरकरणीयाय सज्जीभवावः ।

( इति निष्कांतौ )



१ भक्षण । २ कुसुमे । ३ पुष्पित । ४ अनुगतस्य । ५ वेपं । ६ नाम ।

## प्रस्तावना ।



( ततः प्रविशति विशारदः )

विशारदः—( परितो विलोक्य ) अहो वसंतसमयमोदमानतरुखण्डमण्डितेषु नदीतटेषु मध्याह्नपर्यंतसंचारश्रांतसैनिकजनप्रचुरा निवेशिता एव स्कंधावाराः ।

अद्य हि ।

कच्छान् केप्यधिशेरते तरुतलं प्रच्छायमध्यासते
केचित्केचन सारणीपरिसरे संस्त्यायमातन्वते ।
वध्नंत्यावसथान् परेथ सरसां रोधस्सु रुद्धोष्मसु
ग्रामानेति पुरोपकण्ठसुलभानन्यस्तु भूयान् जनः ॥ ८ ॥

( अन्यतोऽवलोक्य ) अहो नैकविधः सैनिकानामनपायः श्रमापहरणोपायः ।

तथाहि ।

शीतापान्निखनंति केप्यधिनदं तापार्दितोः कूपकान्
श्रांतैर्भूरिजलावगाहनरसात्पूरः परैर्वार्यते ।
ढौकंतेऽद्य फलापचायचपला केचित्फलाढ्यान् द्रुमान्
कूपोपांतभुवो वहंत्युपगतानन्यानुदन्यावतः ॥ ९ ॥

( अन्यतो दृष्ट्वा ) ।

कुल्यायामुपशल्यभूमिषु पुरः प्रोद्यद्विहंगारुतौ
ज्योत्स्नास्रोतसि शीतपाय्यसिलतासंवाधरुद्धोष्मणि ।

१ संतोषजनक । २ जलप्रायप्रदेशान् । ३ अधिवसंति । ४ कुल्यासमीपे । ५ गृहम् । ६ तीरेषु । ७ निवारितौष्ण्येषु । ८ गच्छति । ९ प्रमादशून्य । १० नद्याम् । ११ पीडिता । १२ विश्वासात् । १३ प्रापयंति वापारिके । १४ ग्रामांतं ।

एते यांति कृतोपगूढमधुना कांताभिरध्वश्रम-
क्लांताभिः सह कर्तुमत्र कतिचित् स्वैरावगाहोत्सवम्॥ १०॥

( पार्श्वादालोकितेन निर्दिश्य ) इदं तु पुनरस्मत्स्वामिनः कौरवेश्वरस्य शिबिरं नातिदूरे वाराणस्या विविक्ते[1] एव प्रदेशे निवेशितम् (आत्मानं निर्वर्ण्य) मार्गश्रमलघूकरणोल्लाघं[3] च नः शरीरम् । यावदिदानीं कौरवेश्वरभवनं गत्वा प्रियवयस्यं[2] नंद्यावर्तं पश्यामि । ( परिक्रम्यावलोक्य च ) अहो प्रत्यग्रसंनिविष्टस्य कौरवेश्वरशिविरस्य महती वृत्तांतता[4] ।

तथाहि ।

ऋजुषु तरुषु लग्ना स्थूलदीर्घेषु गंध-
द्विरदपरिषदेषा रुध्यते बध्यते च ।
इह च विटपिखंडे वाजिनां कल्पयंति
स्थगिततरणितापे मंदुरामंदिराणि[5] ॥ ११ ॥

( पुरोऽवलोक्य ) कथमसावग्रतः समुचितस्थानकग्रहणचापलसुलभसैन्यक्षोभचलितचेताः किमपि कुप्यन्नायासयति हस्तिपकानां घातुको गंधगजः ।

तथाहि ।

तिर्यक् पश्यति पृष्ठतोऽपसराति स्तब्धे करोति श्रुतीः
शिक्षां न क्षमते शिरो विधुनुते घंटास्वनायेर्षते ।
संदेग्धि प्रतिहस्तिनं प्रकुपितो दानांबुगंधं निजं
श्यामाहंति[6] करेण याति न वशीं क्रोधोध्दुरः सिंधुरः॥१२॥

( पदांतरे स्थित्वा ) कथमसौ स्वैरचारिपरिपंथिपंथाः । तदितो वयं ( अन्यतो गत्वा अवलोक्य च ) कथमिहाप्यनाश्वासः ( पुनर्निरीक्ष्य ) कथं प्रतिव्यूढः प्रत्यूहः ।

---

१ विजने । २ स्वं प्रति । ३ आरोग्यवत् । ४ विचारः । ५ वाजिशाला ।
६ करिणीम् ।

तथाहि ।

परिभ्रष्टस्थानात्कथमपि समंतात्प्रचलितैः
बलीवर्दो धावन्नयमनुसृतो वाहपितृभिः ।
मुखप्रोते पाशे विलुठति कथंचित् तद्विधौ
खरपुटलग्ने सपदि निपतन् गृह्यत इह ( ? ) ॥

( परिक्रम्य क्षणं स्थित्वा ) अहोऽयं पौनरुक्त्यविमुखो जनस्यालयः । अद्य हि ।

तुच्छच्छायः स देशः स तु विरलजलः सोपि पाथः प्रहीणः
सा भूमिः क्षारतोया परुषदृ[१]पदसौ शर्करा कं[२]र्करा सा ।
तत् क्षेत्रं कंटकाढ्यं तृणविकलमदस्तत्तु धूलीकरालं
छायास्वेवं तरूणामभिदध[३]ति मिथः शैविरा[४] मार्गदुःखम् ॥१३॥

( परिक्रम्यावलोक्य च ) अहो स्पृहणीयं खल्वेतत् ।

अत्र हि ।

प्रच्छायशीतलमहीरुहपादमूला—
न्यध्यासते प्रियतमांकसमर्पिताङ्गाः ।
अध्वश्रमार्तनयनं वदनं दधत्यः
कांता वनांतचलिताय समीरणाय ॥ १४ ॥

( परिक्रम्यावलोक्य च ) कथमितो वारस्त्रीणां सद्मानि । अहो असाधारणः खलु वारवनितानां मंडनप्रकारः ।

कुतः ?

कदा पटकुटी कृता प्रशमितः कदाध्वश्रमः
कदा व्यजनि मज्जनं विरचितं कदा मंडनम् ।
गृहेष्विव पुरः स्थितः परिचितेषु सज्जस्त्वसौ
क्व चेष्यति विलासिनीजनममुं जनः कौशलात् ॥ १५ ॥

१ पाषाण । २ कर्कशा । ३ कथयति । ४ शिविरनिर्मातारः ।

( विचिंत्य ) इयं खलु कार्यांतरव्यापृतानां पथ्या रथ्या तदितो वयं। ( परिक्रम्यावलोक्य च ) इदं कौरवेश्वरभवनं। ( पार्श्वादालोकितेन ) अये अयमुत्तरेण राजगृहबाह्यालिंदं विस्तीर्णप्रसारितदूष्यपटकायमाननिषण्णः काममपि दर्शनीयतामुद्वहति राजवाहनप्रधानगंधगजः।

तथाहि।

हरितकलमपूलग्रंथिनासौ सलीलं
व्यजनि वदनभागानग्रहस्तोद्धृतेन।
मृदयाति तमभिघ्नन् कुंचिते चांघ्रिपृष्ठे
ग्रसितुमथ गजेंद्रो दंतरंध्रेण धत्ते ॥ १६ ॥

( अग्रतो दृष्ट्वा ) कथमसौ प्रियवस्यो नंद्यावर्तः प्रतिहारस्थानान्निर्गत इतएवाभिवर्तते। भवतु प्रतिपालयामि।

( ततः प्रविशति नंद्यावर्तः )

( परिक्रम्य ) कथमसौ अनाकलितकोलातिपातः पातयति कामुकानापातदुस्सहायामापदि मदनः।

तथाहि।

क्षणाद्धैर्यग्रंथिं शिथिलयति निर्मथ्य विनयं
क्षणाल्लज्जां भंजन् क्षपयति विवेकं पटुमपि।
क्षणादन्यामन्यां सृजति रुजमंतर्बहिरपि
क्षणात्कामः कामं जनयति जिगीषूंश्च पुरुषान् ॥ १७ ॥

येन काशीराजतनयादर्शनानंतरमेव कौरवेश्वरस्तादृशी दशामयासीत् ( पुरोऽवलोक्य ) कथमसौ विशारदः प्रतिपाल्य तिष्ठति। तावदुपसर्पामि। ( उपसृत्य ) सखे विशारद कुतस्त्वमियतीं वेलां विलंबितः वंचितः खल्वसि वाराणसीदर्शनात्।

---

१ अकृतकालातिक्रमः। २ प्रारंभे। ३ नाशीकृत्य। ४ अनिर्वचनीयं। ५ गच्छामि।

विशारदः—कदा दृष्टा वयस्येन वाराणसी ? ।

नंद्यावर्तः—श्रूयताम् ।

विशारदः—अवहितोऽस्मि ।

नंद्यावर्तः—इतस्तावन्मार्गश्रमाशिथिलगात्रे प्रतिश्रयमेव प्रस्थिते भवति कौरवेश्वरस्त्रिचतुराभिरूपजनपरिवृतस्तास्ताः परिहासमधुराः कथाः कुर्वन् कियतीमपि वेलां विनोदगोष्ठीमध्यासिष्ट । ततश्च जरठातपतापोद्रेकसुलभनिद्रालसप्रतप्तसैनिकजनसंकुलतरुतले दुस्सहदूष्यकुटीतापताम्यच्छिविरजने ल्पुष्टपांशुपटलाभितप्तधात्रीपृष्ठे पथिकजनपर्यटनविराममूकाध्वनि नितांतक्वथितसरस्सलिलतापभयपलायमानजलपतत्रिनिषेवितपत्रलतीरकच्छांतरे निदाघोष्मदुर्निरीक्षान्तारिक्षे दुष्यमाणदुस्पर्शमर्मरघर्ममारुतपरिस्पंदे क्रमादतिक्रांते मध्यंदिनसमये मध्याह्नतापसंतप्तनभःस्थलावस्थितिमसहमान इव अपरकाष्ठाभिमुखे लंबमाने भगवत्यंबरमणौ जाताया च किंचिच्चरणसंचरणक्षमाया क्षमायां प्रोज्झतीषु च पथिकैः समं तरुमूलानि छायासु प्रशांतप्राये दिवसोष्मणि प्रहताया च तृतीयप्रहरावसानशंसिन्या भेर्यां प्रवर्तमाननगरदेवतायात्रामुपश्रुत्य वाराणसीदर्शनकुतूहली सार्धमस्माभिरुत्थितो हस्तिनाधिपतिः ।

विशारदः—ततस्ततः ।

नंद्यावर्तः—ततश्च निर्वर्तिताशेषपरिजनः परिमितास्मत्प्रमुखविस्रब्धजनपरिवारपरिवृतः सुंदरतममणिमंडितवंदनमालालंकृतमकरतोरणां वाराणसीमभिप्रचलितः ।

विशारदः—ततस्ततः ।

नंद्यावर्तः—ततश्च ।

अंभोरुहोदरपरिभ्रमलब्धगंधैः
संभोगखिन्नयुवतीश्रमवारिचौरैः ।

१ सदन । २ विचक्षण । ३ उष्ण । ४ भूभागे । ५ धरित्र्याम् । ६ याम । ७ श्रुत्वा । ८ निवारित । ९ विश्वसनीय ।

गंगातरंगपरिमर्शमनोज्ञशीतैः ।
स्निग्धामसौ सपदि तामगमत्समीरैः ॥ १८ ॥

विशारदः—ततस्ततः ।

नंद्यावर्तः—प्रविश्य च वाराणसीं क्वचिज्जीर्णोद्यानप्रदेशे तुरंगमवरादवरुह्य तत्रैव छत्रधारिणा अश्ववारेण तुरंगमवरं चावस्थाप्य केवलं सार्धं मया धनुर्ग्राहिणा चासिधेनुकेन कौरवेश्वरः प्रवर्तमाननगरदेवतायात्रां काशीराजपुरीमुपसृत्य क्वचित्प्रचुरतररथतुरगगजपदातिसंचारदुर्गमान् मार्गान्, क्वचित्कमलकुड्मलकोमलांजलिपुंजमंजुलभक्तजनसहस्रसंकुलानि, देवकुलानि क्वचिदुन्निद्रकुसुममकरंदामोदमेदुरपवनान्युपवनानि,क्वचित्प्रचलवीचिनिचयविलुप्यमानविकचसरसिजरजांसि सरांसि, क्वचित्सुरवनितासदृक्षयुवतीजनविहाररम्याणि हर्म्याणि, क्वचिदंतर्दृश्यमानकामिनीवदनकांतिवितीर्णकामिजननयनोपायनानि वातायनानि, क्वचित्कृततपनतापनिग्रहाणि धाराग्रहाणि, क्वचिदुल्लोलकल्लोललोलैर्वनिकुरम्बकराम्वितप्रांताविराजितमनोज्ञानिष्कुंटान्, शृङ्गाटककूटान् क्वचित्पणपरिणनकुपिताक्षिकरूक्षकंठघोषजितराजसभाः द्यूतसभाः, क्वचिदर्धासनोपविष्टप्रियतमानुवर्तनाप्रियान् युवनिकरान्, क्वचिदुन्मिषन्मकरतोरणनिवद्धरत्नछविशिखाविशिखाः पश्यन् क्रमेण राजभवनगामिनो मार्गान्नातिसंनिकृष्टस्य परिपुष्टपरपुष्टचटुलचंचुविघटितमुकुलितपुटाविकीर्यमाणमकरंदबिंदुधाराराजितालवालपरिसरस्य मधुमदमत्तमधुकरमनोहारिझंकारस्य सहकारस्य तले विविक्तौत्सुक्यान् मुहूर्तमासिष्ट ।

विशारदः—ततस्ततः ।

नंद्यावर्तः—अत्रांतरे नगरदेवतायात्रातः प्रतिनिवर्तमानस्तेनैव वर्त्मना प्रवर्तिष्ट गंतुं महान् पौरलोकः ।

---

१ वाराणसीं । २ नाम । ३ नाम । ४ उपगम्य । ५ चैत्यालयानि । ६ स्वीक्रियमाण । ७ सदृश । ८ भ्रमर । ९ गृहारामान् । १० समूहान् । ११ रथ्या–प्रतोली १२ सार । १३ आम्रवृक्षस्य ।

विशारदः—वंचित एवास्मि यात्रादर्शनकौतुकात्।

नंद्यावर्तः—सखे मा खेदं करिष्ठाः [1] सुलोचनास्वयंवरयात्रातः प्राक् पश्चाच्च दिनत्रयं नगरदेवतानामकम्पनेन यात्रा प्रवर्त्यत इति किंवदंती। न खल्वद्यैव यात्रापूरणं। तद्दर्शिष्यत एव।

विशारदः—कदा नु खलु सुलोचना स्वयंवरिष्यति।

नंद्यावर्तः—इतस्तृतीयेह्नीति वदंति।

विशारदः—भवतु कथाशेष एव कथ्यताम्।

नंद्यावर्तः—ततश्च दूरितोत्सारिताशेषजमसंमर्दैः समापतद्भिः प्रतिहारैः परिवारितं मंजुशिंजानमजीरेण मंदप्रक्कणितमेखलागुणेन सलीलभुजलताविक्षेपरणितमणिवलयेन पवनैरप्यालिगनकुतूहलादिव स्तनांशुकांतप्रवेशिभिः सेव्यमानेन स्तनभरोद्वहनश्रमनिश्वासैरपि रसास्वादलोभादिव निपीयमानाधरेण मणिकर्णिकारत्नकिरणमंजरीकलापेन वचनरसादिव स्पृष्टकपोलतलेन मुग्धहरिणमसृणस्निग्धविप्रेक्षितैन हासोत्तरमधुरभाषितेन शिरीषकुसुमसुकुमारशरीरेण तास्तांश्च परिच्छदान् गृह्णता वागृह्णता च पादचारिणा स्त्रीलोकेन परिष्कृत संमुखासीनताम्बूलदायिनीसनाथं मंदमंदसंचारिणापि पुरुषचतुष्टयेनोह्यमानं चतुरंतयानमध्यासीना दर्शनीयानामपूर्वं धाम दर्शनपथमागता कापि स्त्रीसृष्टिः।

विशारदः—ततस्ततः।

नंद्यावर्तः—अवार्ति च ततः काशिराजदुहिता सुलोचनेयमिति महान् जनवादः।

विशारदः—ततस्ततः।

नंद्यावर्तः—ततश्च कौरवेश्वरस्तामपश्यत्।

---

१ जनश्रुतिः। २ कर्णाभरण। ३ वक्रावलोकनेन। ४ धूर्त।

निष्पन्दो[1]स्तिमितेक्षणः क्षणमसौ संजातकौतूहलः
प्रादुर्भूतनितांतविस्मयरसप्रस्मेरगण्डस्थलः ।
व्यापारांतरशून्यमूढकरणग्रामो[2]स्तदैवान्वभूत्
कामप्याहितमोहरुद्धहृदयामंतर्व्यथां मादिनीम्[3] ॥ १९ ॥

विशारदः—ततस्ततः ।

नंद्यावर्तः—ततश्च ।

किमकृतकिमवादीत् कीदृशः कीदृशोऽभूत्
कुरुपतिरिति वक्तुं व्यक्तमेतन्न विद्मः ।
व्यधित[4] विधुरसत्त्वः कौतुकस्तब्धपक्ष्मा
निगलितामिव तस्यां केवलं नेत्रयुग्मम् ॥ २० ॥

विशारदः—अहो तथाविधानामप्यातिविधेयं धैर्यस्खलनमिति यत् सत्यमशरणं सत्त्वं । सखे ततः ।

नंद्यावर्तः—तथा व्रजंती काशीराजपुत्री ।

अथ सपदि यदृच्छावद्धलक्ष्यां वलक्ष-
द्युतिशबलितपातां कौरवे गौरवेण ।
न्यधित दृशमपांगासंगिनीं स्निग्धमुग्धां
कुवलयदलदामशामलां कोमलाङ्गी ॥ २१ ॥

विशारदः—तदेतदुन्मिषितोन्मादनं यदुत कामयमानस्य पुंसः प्रेयस्यां सह नयनसंभेदः । ततः ।

नंद्यावर्तः—अथ तस्यां प्रथमतरानुभूयमानमन्मथरसमंथरितविभ्रमायां तिरोहितायां क्रमेण काशीराजसुतायां कौरवेश्वरस्तन्मार्गदत्तदृष्टिरित्थमभूत् ।

---

१ चलनराहित्येन स्तब्ध । २ इंद्रियसमूहः । ३ मन्मथसंबंधिनीं । ४ व्यधात् । ५ अभिवृद्ध । ६ मिश्रणं । ७ मंद ।

मूढ इव विलिखित इव उत्कीर्ण इव विशीर्ण इव मुषित इव आविष्ट इव हृत इव दीन इव ।

**विशारदः**—अहो अतिप्रसक्तं । अथवा एतदपि संभाव्यत एव, न खल्वंतर एवावस्थानं निपततः प्रस्तरेस्य । तत. ।

**नंद्यावर्तः**—ततश्च मया हस्ते गृहीत्वा देव दृष्टैव सर्वतो वाराणसीति, बलान्निर्बध्यमानः प्राग् गृहीतामपि ताम्बूलवीटिकामनिच्छाशिथिलेन हस्तेन मम हस्ते विसृज्य शून्यांतःकरण एवापरिक्षितपदन्यासः विसं स्थुलया गत्या तदेव जीर्णोद्यानमासाद्य आरूढतुरगमः । सार्धमस्माभि पुनरिहागतः ।

**विशारदः**—ततः ।

**नंद्यावर्तः**—आदिश्यमानो गोपयितुं निषिद्धाशेषपरिजनः प्रविष्टोऽभ्यंतर अंतरं च मार्गायासादत्रैव स्वपन्नार्यसौधातकिस्तदागमनं ज्ञात्वा सत्वरमुपस्थितः ।

**विशारदः**—ततः ।

**नंद्यावर्तः**—ततश्च सौधातकिं हस्ते गृहीत्वा किमपि वक्तुकाम इव शयनमंडपिकां प्रविश्य पर्यंकिकामलंकृतवान् ।

**विशारदः**—प्रायेण तद्दर्शनवृत्तान्तमेव आत्मनि सोढुमक्षमस्तस्मै विवक्षति ।

**नंद्यावर्तः**—बाढं तथैव ।

**विशारदः**—युक्तमेव प्रियसुहृदे स्वानुभूतं निवेदयितुं । सखे गच्छत्वेतत् । एहीदानीं गृहं गत्वा कांचिद्वेलां विश्रमिष्यावः ।

**नंद्यावर्तः**—यदाह वयस्यः ।

( परिक्रम्य निष्क्रांतौ )

---

१ शिलाया । २ निम्नोन्नत । ३ विदूषक । ४ सुलोचनाया । ५ विदूषकाय ।

## शुद्धविष्कंभः ।



( ततः प्रविशति राजा विदूषकश्च । )

राजा—(दृष्ट्वा च तामद्भुतदर्शनां किमप्यन्तर्विस्मयमानो मनस्यकार्षीत्)

इयं चेत् सृष्टा स्यादमृतनिधिनैवेन्दुवदना
कथं क्राम्यत्कांतिः सृजतु स इमामस्थिरकलः ।
अथैनां कामश्चेत् प्रकृतिललितः स्रष्टुमुचितः
स्वसत्तायां कोन्यः प्रथममवलंबोस्य भवतु ॥ २२ ॥

विदूषकः—भो वेअस्स किं णु खु सा जह सुणिज्जइ रूवसोहग्गेण तह एव्व परमत्थदोवि ।

राजा—वयस्य यथाश्रुतमित्यल्पमिदमुच्यते । सा खलु ।

शृंगारस्य गरीयसी परिणतिर्विश्वस्य संमोहिनी
विद्या काप्यपरा परा च पदवी सौन्दर्यसाराश्रियां ।
उद्दामो मदनस्य यौवनमदः कुल्यारतिस्रोतसां
केलिर्विभ्रमसंपदामविकलो लावण्यपुण्यापणः ॥ २३ ॥

विदूषकः—तेणं हि जुत्तं एव्व मज्झमलोअस्स अलंकराणिं सुलोअणिं वण्णोत्ति लोओ ।

राजा—वयस्य अपश्यन् कः प्रत्येति । सा हि ।

शीतांशोरविनिसृता नयनयोराल्हादिनी चंद्रिका
द्रागंतर्दधती मदं च मदिरातंत्रैरनिर्वर्तिता ।
पुष्पैरग्रथिता निसर्गललिता माला मनोहारिणी
जीमूतादकृतोद्गतिः स्थितिमती विद्युत्समुद्योतिनी ॥ २४ ॥

---

१ भो वयस्य किं नु खलु सा यथा श्रूयते रूपसौभाग्येन तथैव परमार्थतोपि । २ तेन हि युक्तमेव मध्यमलोकस्यालकरणा सुलोचनां वर्णयति लोक । ३ व्यापारैः ।

विदूषकः—अहो[1] अच्चेअरं ।

राजा—अपि च। सा समग्रेन्द्रियग्रामसमाल्हादिनी पुनरित्थमुत्प्रेक्ष्यते।

गात्रे चदनचर्चा मुखे सुधा वकुलपरिमलो घ्राणे ।
परिवादिनी श्रवणयोरीक्षणयोः शारदी ज्योत्स्ना ॥ २५ ॥

विदूषकः—एसा सीमा पसंसाओ ।

राजा— तामेव पुनस्सकौतुकं च वहुमानं च सानुरागं च निर्वर्णयतः स्मरशरनिकरनिकृतसत्त्वसारस्य प्रतिक्षणमंतर्विशीर्यमाणधैर्यावष्टम्भपारिप्लवहृदयस्य विवर्तमानदुर्वारमनोरथसहस्रदूयमानस्य ममाभूच्चेतासि ।

✓ आघ्राणव्यवधायिना स्तनतटे किं चंदनेनामुना
किं गाढं परिरंभमन्तरयता स्थूलेन हारेण वा ।
रुंधानेन कि मुत्तरीयसि च येनेच्छाविहारं दृशो-
र्यद्वा यत्स्पृहणीयमस्ति सुलभास्तस्यान्तराया अपि ॥२६॥

विदूषकः—तदो[3] तदो ।

राजा—ततश्च सहयायिनि जने कुतोप्यस्मदधिष्ठितायां दिशि व्यापारितदृशि स्वयमपि चलशफरी चारुलोचना तत्रैव यदृच्छया प्रचलमधुकरमालासदृशं दृशमदात् ।

विदूषकः—एसो एत्थ समस्सासो जव्वअस्सोवि ताए दिट्ठोत्ति ।

राजा—ततश्च सखे ।

लज्जाशृंखलया मनाक् नियमितैस्स्मेरोल्लसत्तारकैः
किंचित्कुंचितलोचनांतचलितैर्लीलोद्यतभ्रूलतैः ।
तस्याः प्रस्फुरदार्द्रकौतुकरसस्निग्धैरहं प्रेक्षितै-
रापीतश्चलितः क्षतो निगलितस्संतर्जितो निर्जितः ॥ २७ ॥

---

१ अहो आश्चर्य । २ एषा सीमा प्रशंसाया । ३ ततस्तत । ४ एषोत्र समाश्वासः यद्वयस्योपि तया दृष्ट इति ।

विदूषकः—अहो महारंभो मयणसंरभो । वअस्स तदो तदो ।

राजा—ततश्च सा यांत्येव तथा ममांतिकात् प्रत्याहृत्य सत्रपं नेत्र-मग्रहस्तेन पार्श्वसान्निहितमुद्धृत्य दर्पणं तमेव पुनस्संक्रामदस्मत्प्रतिच्छंदक-सनाथं व्यधात् ।

विदूषकः—अभिजादं दंसणोवाअविण्णाणं । तदो तदो ।

राजा—स तु पुनस्तया दर्पणः ।

निर्वर्णितस्ससस्पृहमीक्षणाभ्यां
कपोलयोस्सादरमर्पितश्च ।
न्यस्तश्च भूयः स्तनयोः सुदत्या
मुखेन कामं परिचुम्बितश्च ॥ २८ ॥

विदूषकः—अहो पडिच्छंदएवि तुह कासीराअउत्तिए बहुमाणो ।

राजा—वयस्य ।

शैत्यने वा रुचिरता बहुमान तोवा
मन्येत वा किमपि कारणमन्यदेव ।
संक्रातमत्प्रतिम इत्यथवास्तु तस्याः—
स्संतर्पणोथ हृदयस्य स दर्पणोऽभूत् ॥ २९ ॥

विदूषकः—होदु जाणीआदि एव्व एत्थ कारणं । तदो तदो ।

राजा—किंच सखे ।

प्रचलवलयमंदोन्नादिना दंतपत्रं
सुरचितमपि सख्याः संजयंती करेण ।
अकृत च सविलासं चारु हासोत्तराणि
प्रविकशितकपोला जल्पितान्युत्क्षिपंती ( ? ) ॥ ३० ॥

---

१ अहो महारंभोमदनसरंभं ।वयस्य ततस्तत । २ अभिजातं दर्शनोपायविज्ञानं । ततस्तत । ३ अहो प्रतिच्छंदकेपि तव काशीराजपुत्र्या बहुमानः । ४ भवतु जानीयते एव अत्र कारणं । ततस्तत. ।

**विदूषकः**—अवंतीण्णो विअ तिस्सा वअस्से भावो ।[1]

**राजा**—असंहार्यं खलु मन्मथास्त्रमभिमतामनुरज्यतः पुंसः प्रत्यनुरागदानं । येनेदानीं ।

**स्निग्धैर्वीलितयंत्रणाविचलितैस्तस्याः कटाक्षेहितै-**
**रीषत्प्रस्फुरिताधरोष्ठरुचकैस्सख्या समं जल्पितैः ।**
**मध्ये चोच्छ्वसितस्तनैर्विहसितैर्दंतांशुनीराजितैः**
**कामः कामपि मे करोति मनसः कामं परामुत्कताम् ॥३१॥**

**विदूषकः**—तदो[2] अ किं वुत्तं ।

**राजा**—ततश्च नातिदूरमिव गते चतुरंगतयाने चतुरंतयानाविन्यस्तैकहस्तारिणीमपरां सखीमभिभाषितुकामा किल तिर्यग्वलमानवालिकं विवलनवशानिविडितकुचतटाभोगसंकुचितोरस्कमनातिच्युताशिथिलस्तनांशुकं अंसभागावष्टब्धकपोलपालिकं सलीलात्रिकविवर्तनाविश्लथकवरीभारालंकृतापरांसभागमपांगोत्सगपर्यस्ताचिकुरलोचनं अर्धविस्रस्तकर्णोत्पलचुंब्यमानभ्रूलतांतमसौ द्विगुणितोपधानावष्टंभानिहितैकहस्ता सविभ्रमदर्शितपूर्वकायकांतिकमनीया किमपि किमप्याभाषमाणा च तामंतरान्तरा च चोदयंती च मदंतिकं तरलतरतारसारोदरां दृशं दृश्यमानेव संसक्तमनातिचिरेण तिरोहिता काशीराजदुहिता ।

**विदूषकः**—तदो[3] तदो ।

**राजा**—ततश्च न जाने किमभूव किमकार्षं किंवृत्तमिति केवलं पुनस्तन्मार्गनिहितनिश्चललोचनः किंकर्तव्यतामूढः क्षणमस्थाम् ।

**विदूषकः**—वअस्स[4] तुहारिसाणंपि तारिसो धेरभंगोत्ति अच्चाहितं ।

**राजा**—वयस्य धैर्यभंग इति नैतावतापसरति । तदा खलु ।

---

१ अवतीर्ण इव तस्याः वयस्ये भावः । २ ततश्च किं वृत्तं । ३ ततस्ततः । ४ वयस्य त्वादृशानामपि तादृशो धैर्यभग इति अत्याहितम् ।

सत्त्वं विलुप्तमिव तप्तमिवांगमंगं
धैर्यं विशीर्णमिव दीर्ण इवांतररात्मा ।
चेतः प्रलीनमिव लीन इव प्रबोधे
मानः प्रमृष्ट इव कृष्ट इवास्मि चाहम् ॥ ३२ ॥

विदूषकः—तदो[1] तदो ।

राजा—ततश्चाहं नंद्यावर्तेनारुध्यमानः शून्येन चेतसा यथागतमत्रायासिषम् ।

विदूषकः—अदो[2] वरं जाणीअदि एव्व ।

राजा—( मदनावस्थामभिनीय ) सखे तद्दर्शनात्प्रभृति च ।

विस्रब्धस्य वचोपि नावतरति व्यामूढयोः श्रोत्रयोः
संस्कारार्पिततन्मुखेक्षणसुखेनान्यद् दृशौ पश्यतः ।
बाह्यव्यापृतिनिर्व्यपेक्षमधुना प्रत्यङ्मुखं संकुच-
च्चेतस्तद्गुणचिंतनानियमितं मुह्यत्यकाण्डे मुहुः ॥ ३३ ॥

विदूषकः—भो[3] वअस्स ण जुत्तं पुण तुज्झे एव्वं णाम उज्झिदुं अखंडितपसरं धीरत्तणं ।

राजा—( सांतस्तापं ) वयस्य सौधातके किं ब्रवीमि ।

संकल्पशतविधुरितो धैर्यपरिस्खलनजातवैलक्ष्यः ।
लक्षीकृतः शराणां निसर्गकठिनेन मदनेन ॥ ३४ ॥

विदूषकः—भो[4] वअस्स सुणाहि दाव जइ तारिसो वअस्से कासीराअउत्तीए दंसिदो भावे तदो अस्सासिदु वेअ अत्तहोदोवि जत्त जुत्तं ण एव्व

१ ततस्ततः । २ अतःपरं ज्ञायते एव । ३ भो वयस्य न युक्तं पुनः तव एवं नाम उज्झितुं अखंडितप्रसरं धीरत्वं । ४ भो वयस्य शृणु तावत् यदि तादृशः वयस्ये काशीराजपुत्र्या दर्शितः भावः ततः आश्वासितुमेव अत्रभवतोपि यत्र युक्तं नैव संतपितुं । यतो दैवसंपादितः समासन्न एव तस्याः आत्मच्छंदवशानुवर्तनेन समाराधयिता मनोरथानां स्वयंवरोत्सवः ।

संतप्पिदुं । जदो देव्वसंपादिदो समासण्णो एव्व तिस्सा अप्पच्छंदवसाणुवत्तणेण समाराहइत्तओ मणोरहाणं सअंवरूसवो ।

राजा—भवतु वा तथा भवतः यथा प्रतिभाति । तथापि न तावता संप्रति समाश्वासः । मम हि ।

तैस्तैर्मनोरथैस्तस्यामापतद्भिः कदर्थितम् ।
अतिवाहयितुं चेतो नालं कालकलामपि ॥ ३५ ॥

( नेपथ्ये वैतालिकौ )

वैतालिकौ—विजयतां कौरवेश्वरः सुखाय सायंतनसमयो भवतु देवस्य ।

प्रथमः—

उन्मीलन्नवमल्लिकांतरगलत्सौरभ्यसंवासिताः
श्रांता या दिवसश्रियो हिमकणैर्घर्माम्बुकल्पैर्जडाः ।
पेया घ्राणपुटैः सुखेन सुतरामालिंगनीया भुजै-
र्निश्वासा इव वांति मंदमधुना वाता वसंतश्रियः ॥ ३६ ॥

द्वितीयः—

सायं मज्जनशीतला मृगमदव्यालिप्तकंठाः स्त्रियः
काश्चिन् नूतनमल्लिकामुकुलकैर्भारं दधत्यस्स्तनैः ।
प्रत्यग्रागरुधूपवाससुरभौ कुर्वंति चातिस्रज
केशांते रतिलास्यसंपद इव प्रस्तावपुष्पांजलिम् ॥ ३७ ॥

विदूषकः—( आकर्णितकेन ) भो वअस्स उट्ठेदु दाव समासण्णा खु साअंतणसंझा ।

( उत्तिष्ठत )

राजाः—कथमवष्टब्धा संरब्धमकरध्वजसमरोद्वेला । इयं हि ।

मनोरथशतार्तानां प्रोषितानां प्रमाथिनी ।
निशीथिनी जगज्जिष्णोर्मन्मथस्य वरूथिनी ॥ ३८ ॥

---

१ वंदिनौ । २ भो वयस्य उत्तिष्ठ तावत् समासन्ना खलु सायतनसंध्या ।

**विदूषकः**—इदो ईदो ।

( परिक्रामतः )

**राजा**—( सोत्कंठम् ) ।

अपांगव्यासंगस्खलदलसविभ्रांतनयनं
दरप्रोद्यद्दंतद्युतिदलितरागाधरदलम् ।
अविस्पष्टस्वेदं पुलकितकपोलं मृगदृशा-
स्तदद्यापि स्पष्टं मुखमभिमुखं दृश्यत इव ॥ ३९ ॥

( इति निष्क्रांतौ )

श्रीवत्सगोत्रजनभूषणगोपभट्ट-
प्रेमैकधामतनुजो भुवि हस्तियुद्धात् ।
नानाकलाम्बुनिधिपाण्ड्यमहेश्वरेण ।
श्लोकैः शतैस्सदसि सत्कृतवान् बभूव ॥ ४० ॥

इति श्रीगोविन्दस्वामिनस्सूनुना हस्तिमल्लेन विरचिते विक्रांतकौरवीय-नाटके वाराणसीदर्शनो नाम प्रथमोऽङ्कः समाप्तः ॥ १ ॥

---

१ इतः इतः ।

# द्वितीयोऽङ्कः ॥ २ ॥



( ततः प्रविशति प्रतीहारः )

प्रतीहारः—( शयनादुत्थाय ) कथमस्माभिः समुचित एवावसरे प्रतिबद्धं । प्रातस्तरामेव गंगातीर्थाभिरक्षणाय मया गंतव्यं । यतः पूर्वेद्युरेव स्वयंवरदिवसाद्भर्तृदारिकया गंगातीर्थ एव सौभाग्यवृद्धये स्नातव्यमिति कुलवृद्धाभिरादिष्टम् । सौवस्तिके च कस्याः स्वयंवरयात्रा नेदीयसी च संप्रति प्रगेतनी संध्या ।

तथाहि ।

अनतिगलितनिद्राजाड्यदीव्यद्गलानां
प्रसरति कृतहिक्कं कूजितं कुक्कटानाम् ।
विदधति च विहंगास्तत्क्षणोद्भूतबोधाः
कलकलमधिनीडं ग्रामचैत्यद्रुमेषु ॥ १ ॥

तदिदानीं गंगातीरमेव गच्छामि ( उत्थाय परिक्रामन् ) इयं खलु अष्टमावशिष्टा किमप्युत्कयति कामुकाननतिचिरविनश्वरी विभावरी। संप्रति हि।

चुंबंतोऽधरपल्लवं नियमितश्वासं शनैः सुभ्रुवां
सुप्तानां सभयं सशुष्करुदितं मंक्षून्मिषच्चक्षुषाम् ।
आश्लेषं च ससाध्वसं विरचितं द्रागुज्झतीनां रुषा
कुर्वंति प्रतिबोधनां प्रणयिनः प्रत्यूषप्रत्युत्सुकाः ॥ २ ॥

इयमेव च निरर्गलप्रणयरसलीलाकामिनामभिमततमा वेला ।

तथाहि ।

तत्कालप्रतिबोधिताभिरलसोन्निद्रेक्षणाभिः प्रियाः
सीदंतीभिररं प्रदोषसुरतश्रांतिश्लथैरंगकैः ।

निर्मर्यादविमर्दनिर्दयममी विस्रंभरुद्धत्रपं
सेवंते रतिलंपटा युवतिभिः प्रत्यूषरत्युत्सवम् ॥ ३ ॥

( स्पर्श रूपयित्वा ) अहो सौकुमार्यं निशावसानपवनस्य । संप्रति हि ।

दूरादार्द्रं परिमलमसावाहरन्मालतीनां
व्यावृत्तोऽन्तः प्रतिनवदलत्पाटलीसौरभेण ।
निर्निश्वासोन्नमितवदनं घ्राणरन्ध्रेण पेयो
वायुः श्रांतिं रतिविततिजां लुंपते दंपतीनाम् ॥ ४ ॥

संप्रति च रजनीविरामविसर्जनजानितोत्कंठाय स्वादीयानेव स्वदते कोपि रसो मिथुनाय ।

तथाहि ।

निर्गंतुं प्रथमोत्थितस्य शयनात्तल्पास्थिता कामिनी
व्यत्यासानमिताननस्य सुमुखी प्रोत्तानयंती मुखं ।
कंठासक्तकरा विपर्ययकृताश्लेषस्य भूयोधरं
चुंबन्ती परिचुम्बिताधरदलं जानात्यपूर्वं रसम् ॥ ५ ॥

( नभो विलोक्य निर्वर्ण्य च )

विशुष्यतः संप्रति कौमुदीजल-
प्लवस्य तिग्मांशुभयान्नभःस्थले ।
प्रणष्टशिष्टा इव बुद्बुदा इमा
विभांति तारा विशरारुरोचिषः ॥ ६ ॥

( पुनर्निर्वण्य ) कथं विभातप्रायमेव । अद्य हि ।

लघु विघटयितारः कुड्मलान्यब्जिनीनां
झटिति घटयितारः कोककांताः स्वकांतैः ।
जहति निषधशैलाधित्यकोत्संगसंगं
क्षपिततिमिरलेखास्तिग्मभानोर्मयूखाः ॥ ७ ॥

निर्गताः स्मो वाराणस्याः (पुरोवलोक्य) कस्य खल्वसौ सौविदल्लो जान्हवीगामिनमेवाध्वानमपसरति।

(प्रविश्य सौविदल्ल)

सौविदल्लः—केहं अज्ज तरुणदिणअरकरणिअरणिवडणफुडफुडंतपुडइणीसंदमअरंदणिसंदसमुध्दूणणाद्दिअदिसामुहेण पच्चद्दविअसंतसरसकेसरपसूणपरिमलुग्गारमंसलेण कुहकुहंतजलसउंतकेलीकलहकलअलाअड्ढणपेसलेण उप्पेलणफुल्लाविअहल्लअफुल्लासवेल्लिअमल्लिआअक्खतल्लएण उग्घाणिअणलिणघरपरिपादिठिविओसरीअछप्पअरिंछोलिझंकारमहुरेण गोसग्गसमीरणेण आलिज्जंतणहअलो पसरंतमसिणवालाअवघसिणकद्दमसमालिंदगअणधंतो वट्टेइ। दंसिदुद्दामणिसी हरइ इन्द्धविअलक्खतरुणकामिणीपाअडअलदहविम्भमओ समओ। (नभो विलोक्य) एत्थ हि। अत्थाअंपि व कालिआमइलिउज्जोअं अप्पमुट्ठअं एअं रेहइ खंडिअंसुपसरं सीआंसिणो मंडलं पल्लच्छेइ घणंधआरणिअरं वित्थारअंतो दिसाचक्कं कुक्कुडचूडपाडलसिहो अक्कसुपब्भारओ। इअं चेअ पुणरुत्तरतिसंभोअसंमद्दमलिणिअपसाहणस्स प्रसाहणंतरग्गहणवेला विलासिणीजणस्स। तहहि।

---

१. कथमद्य तरुणदिनकरकरनिकरनिपतनस्फुटस्फुटत्पुटकिनीसाद्रमकरंदानिष्यंदसमुद्धूननार्दितदिशामुखेन प्रत्यग्रविकसत्सरसकेशरप्रसूनपरिमलोद्गारमासलेन कुहकुहायमानजलशकुंतकेलिकलहकलकलाकर्षणपेशलेन उत्पेरणफुल्लापितहल्लकफुल्लसवासितमल्लिकाक्षतल्लजेन उद्घाटितनलिनगृहपरिपात्यस्पष्टप्रसृतपट्पदरिंछोलिझकारमधुरेण गोसर्गसमीरणेन आलिप्तनभस्तल. प्रसरन्मसृणवालातपघुसृणकर्दमसमालिप्तगगनध्वातो वर्तते। दर्शितोद्दामनिशी धरति चिह्नविलक्षतरुणकामिनीप्रकटसौंदर्यविभ्रमस्समय। अत्र हि। आदर्शमिव कालिकामलिनितोद्योतं अप्रमृष्टमेतत् प्रतिभाति खडिताशुप्रसरं शीतांशोर्मंडलं पर्यस्तयति घनांधकारनिकरं विस्तारयन् दिशाचक्रं कुक्कुटचूडपाटलशिखोऽर्कांशुप्राग्भार.। इयमेव पुनरुक्तरतिसंभोगसमर्दमलिनितप्रसाधनस्य प्रसाधनांतरग्रहणवेला विलासिनीजनस्य। तथाहि।

वेहइ चिहुरभारो मालदी पाडलाणं
कुसुमवइहरेण गुंफिअं मज्झमालं।
वउलकुसुमगुच्छं माहवी फुल्लविद्धं
फुरइ अ थणपट्ठे दामअं कामिणीणं ॥ ८ ॥

सुद खु मये गदो अज्ज मंदाअणीं अवेक्खिदुं सामिकोरवेसरोत्ति। जाव एण्हिं गंगातीरं गच्छामि। ( परिक्रामति )।

**प्रतीहारः**—यावदेनं पृच्छामि ( उपसृत्य। ) कुतो भवान् किमत्रागतोस्ति।

**सौविदल्लः**—ईदो कोरवेसरस्स खंदावारादो आअच्छेमि तस्स चेअ हि परिअणो।

**प्रतीहारः**—कच्चिदिदानीं मेघेश्वरोपि विस्मारयति गुणान् महाराज-सोमप्रभस्य।

**सौविदल्लः**—अअँअ किं एत्थ बहु वण्णिअदि। पडिच्छंदअं खु सो पिदुणो।

**प्रतीहारः**—तेन हि राजन्वानेव दिष्ट्या कुरवो जनपदः। तथापि तद्गुणकथाकर्णनकौतुकं तरलयति नश्चेतः। कथय कीदृश इदानीं कौर-वेश्वरो मेघेश्वरः।

---

१ " वहति चिकुरभारो मालती पाटलाना कुसुमव्यतिकरेण गुंफिता मध्यमाला। वकुलकुसुमगुच्छं माधवी फुल्लविद्धं, स्फुरति च स्तनपृष्ठे दामकं कामिनीनाम् "। श्रुतं खलु मया गतोऽद्य मंदाकिनीमवेक्षितुं स्वामी कौरवेश्वरः इति। यावदिदानीं गंगातीरं गच्छामि। २ इतः कौरवेश्वरस्य स्कंधावारादागच्छामि तस्यैव हि परिजनः। ३ आर्य किमत्र बहु वर्ण्यते प्रतिच्छंदकं खलु सः पितुः।

सौविदल्लः—तेण हि सुणिज्जउ एण्हिं खु सो ।

चित्ते धरेइ करुणं धरणिं भुअम्मि
सीसम्मि पाअजुअलं परमेसरस्स ।
णिल्लुत्तदुक्खविअणं सअलंपि लोअं-
अत्ताणअंपि विअ रक्खइ अप्पमत्तो ॥ ९ ॥

प्रतीहारः—तेन हि पुत्रवतामप्यग्रणीर्महाराजसोमप्रभः।(पुरो विलोक्य)। इयं खलुसमुच्चरज्जलशकुंतमंथरारावहारिणा समीरणेन लक्ष्यते समासीदंती सुरस्रवंती ।

सौविदल्लः—कॅहं समासण्णा जाह्नवी ।

( उभौ परिक्रम्य दृष्ट्वा च )

प्रतीहारः—इय हि सा

गंगातरंगेण विधारयती
सरोजजालं चलहंसमालम् ।
उल्लासिहारच्छविहारितोया
वाराणसी सीमाविहारिपूरा ॥ १० ॥

किं च ।

मदकलसारसलीला
कल्हारविसरणमंजुलसमीरा ।
तामरससरसकेसर-
विसराकुलसलिलकल्लोला ॥ ११ ॥

इतो मया गंगातीर्थाभिरक्षणाय गंतव्यम् ।

---

१ तेन हि श्रूयतामिदानीं खलु सः । "चित्ते धरति करुणां धरणीं भुजयोः शीर्षे पादयुगलं परमेश्वरस्य । निर्लुप्तदु खवेदनं सकलमपि लोक आत्मानमपीव रक्षत्य-प्रमत्तः । २ कथं समासन्ना जान्हवी ।

**सौविदल्लः**—कुदो खु सव्वलोअसाहारणं गंगातित्थंवि अभिरक्खिज्जइ।

**प्रतीहारः**—अत्र खलु काशीराजदुहिता सुलोचना सौभाग्यमज्जनार्थं आगमिष्यति।

**सौविदल्लः**—तेण हि जुज्जइ।

**प्रतीहारः**—क्व पुनर्भद्रमुखेन चालितव्यम्?

**सौविदल्लः**—गदो खु अग्गदो मंदाइणीं अवेक्खिदुं सामी मे कोरवेसरो। (पुरो निर्दिश्य) एदं च दोरिदरअतुरिलतुरअपडिणवखुरघादाणिरंतरखंडिदं सूआवेदि तस्स गमणमग्गं धरणिवट्ठं।

**प्रतीहारः**—तेन हि युष्माभिरपि परिहर्तव्यो गंगातीरप्रदेशः।

**सौविदल्लः**—अअअ तह।

(निष्क्रांतौ)

---

१ कुतः खलु सर्वलोकसाधारणं गंगातीर्थमपि अभिरक्ष्यते। २ तेन हि युज्यते। ३ गतः खल्वग्रतो मंदाकिनीमवेक्षितु स्वामी मे कौरवेश्वर। ४ एतच्च धोरितरयत्वरिततुरगप्रतिनवखुरघातानिरंतरखाडितं सूचयति तस्य गमनमार्गं धरणीपृष्ठम्। ५ आर्य तथा।

## मिश्रविष्कंभः ।



( ततः प्रविशति सोत्कंठो राजा विदूषकश्च )

राजा—

प्रागावयोरुपनतस्य समागमस्य
संकेतवासभवनं तदनुस्मरामि ।
यत्रैव दर्पणतले क्षणसन्निविष्टा
संक्रामितौ सममहं च सुलोचना च ॥ १२ ॥

इदं तु पुनरलब्धविश्रामं परिभ्राम्यत्कथं नु नाम धार्येत धैर्यावसादतरलं चेतः । यतो हि मे ।

येनैव सा प्रथममिंदुमुखी प्रयाता
मार्गेण मां विकिरती स्मरमार्गणानाम् ।
तामेव संप्रति च मार्गयतोऽस्य भूयः
पर्याकुलस्य मनसोपि स एव मार्गः ॥ १३ ॥

निपीतो नेत्राभ्यामधररुचकः कौतुकरस—
प्रसंगस्मेराभ्यां प्रथममभववत्पक्ष्मलदृशः ।
कथं पातुं वांछां पुनरपरथैवेयमपरा
परं धैर्यध्वंसं समविदधती नो परमतिः ॥ १४ ॥

विदूषकः—भो[1] वअस्स रमाणिज्ज खु एअं गंगातीरुज्जाण जाव दक्खिमो ।

राजा— यद्भवते रोचते ।

विदूषकः—इदो[2] इदो (परिक्रामतः) भो[3] वअस्स दक्ख दाव गंगातीरु-

---

१ भो वयस्य रमणीयं खल्वेतत् गंगातीरोद्यानं यावत्पश्यामः । २ इत इतः ।
३ भो वयस्य पश्य तावत् गंगातीरोद्यानस्य रामणीयक,अत्र हि मध्यनिरंतरनिबद्धम-

ज्जाणस्स रामणिज्जअं। एत्थ हु। मज्झआराणिरंतराणिबद्धमहाणलिमाणीविडं-तकंतिविसेसा जंबूणअमणिपालंवा विअ दुब्भंति अल्लीभमरखब्बुरा आरेव-हविडवेहिं फुल्लमंजरीओ। विअसंति णिम्मलरूप्पच्छाविधवलुज्जलदलाइ तवणिज्जचुण्णसारिच्छारुणकेसरुक्कराइ विद्दुमखंडविलोहिअवट्टुलकण्णिआइ पुण्णाइपुप्फाइ। दीसंति थोरमुत्थाहलफलिहधवलाइ णिम्महिअवहलमइरु-ग्गंधवंधुराइ तक्खणच्चोड्डुविआलिआइ महुअकुसुमाइ। सोहंति खंडिअजण-हिअउक्खंडणसंकंतवहलरुहिरकद्दमरसरंजिआइ उद्दाममअरंदअसद्दलणहरं-कुराइ विअ बाहिरफुटगंठिविअडणसोणिमाइ किंसुअकुसमाइ। अह हि। ओत्ताणपुडइणीराइआइ वहुमंजरिल्लसहआरआइ। कुसुमभरभरिअसेहालि-आइ। भूरि विअसंत णोमालिआइ। थवअसआणिविडकंकेलिआइ। वि-अलंतासवविसरोल्लिआइ। मउल्लग्गममणोहरमाल्लिआइ। उप्फुल्लसुरहिबहुवल्लि-

ह्मानीलमणिविगलत्कांतिविशेषाः जाबूनदमणिप्रालंवा इव उह्यंते आनीलभ्रमरकर्वुरा आरेवनविटपैः फुल्लमंजर्यः। विकसंति निर्मलरूप्यच्छाविधवलोज्ज्वलदलानि तपनीय-चूर्णसदृक्षारुणकेसरोत्कराणि विद्रुमखंडविलोहितवर्तुलकर्णिकानि पुन्नागपुष्पाणि। दृश्यन्ते स्थूलमुक्ताफलफटिकधवलानि निर्मथितवहलमदिरोद्गंधवंधुराणि तत्क्षणवृंतविगलितानि मधुककुसुमानि। शोभंते खंडितजनहृदयोत्खंडनसंक्रांतवहलरुधिरकर्दमरसरंजि-तानि उद्दाममकरध्वजशार्दूलनखाकुराणीव वहिस्फुटग्रंथिविघटनघनशोणिमानि किंशुककुसुमानि। अथ च। उत्तानपुटकिनीराजितानि वहुमंजरीवत्सहकारकाणि कुसुमभरभरितशेफालिकानि भूरिविकसन्नवमालिकानि स्तवकशतनिविडकंकेलिकानि विगलदासवविसरार्द्रितानि मुकुलोद्गममनोहरमल्लिकानि उत्फुल्लसुरभिवहुवल्लिकानि निपतत्कुसुमरजोधूसराणि मलयानिलचाचल्यमानकेसराणि सर्वांगसुराभिनव्यमरुवकाणि नवगुच्छगुफितकुरवकाणि झंकारमुखरेंदिराणि सुखशीतलमाधवीमादिराणि, मधुशी-करवत् शिशिरवकुलानि मधुरनिनदस्वरभृतकुलानि दर्शितवसंतनवविभ्रमाणि संमा-नितपवनपरिभ्रमाणि, इदानीं हरंति युवजनमनांसि गंगातटपर्यंतवनानि। पश्य पश्य। इह च सुखविनोदे कृतमदनोदये सुरनदीतीरवनोदरे ननु सहचरीसहितः सुरजनः सुखितः मज्जति रतिसागरे।

आइ णिवडंतकुसुमरअधूसराइ मलआणिलचंचेल्लिअकेसराइ सव्वंगसुरहिण-वमरुवआइ णवगुच्छगुंठिअकुरवआइ झंकारमुहुरिंदिराइ सुहसीअलमाहइ मदिराइ । महुसीअरिल्लासिसिरवउलाइ दंसिदवसंतणवविब्भमाइ सम्माणि-अपवणपरिब्भमाइ एण्हिं हरंति जुवजणमणाइ । गंगाअडपेरं तवणाइ पच्छ पच्छ । इह अ सुहविणोदए किअमअणोदए सुरणईतीरवणोअए णं सहअरिसाहिओ सुरअण सुहिओ वुड्डइ रहरससाअरे ।

राजा—( निर्वर्ण्य ) वयस्य सम्यगुपलक्षितम् । अत्र हि ।

चूषंश्चूतांकुराग्रं क्षणमथ कलिकाः पाटयन् पाटलीना-
मास्कंदन् कुंदकोशं झटिति विघटयन् कुड्मलं कारहाटम् ।
भिंदन् मंदारवद्धं मुकुलमविकचं चंपकानां च चुम्बन्
पुष्पादभ्येति पुष्पं मधुकरनिकरः प्राप्तहर्षप्रकर्षः ॥ १५ ॥

अपि च । अयं च खलु मतंगजमदामोदसंवादिसुरभिसुमनाच्छादयति सप्तच्छदो गंधांतरग्रहणशक्तिं घ्राणपुष्टस्य । अयं च धौतकलधौतगोलककमनीयानि सकौतुककामिनीजनाग्रहस्तग्रहणलीलार्हाणि बिभर्ति महार्हाणि फलानि जंबीरः । इमानि च स्निग्धहरितानि लुठयाति विम्बोष्ठानां प्रकोष्ठकांतिं पुण्ड्रेक्षुकांडानि । अयं च तरुणकामिनीकर्णपूरकरणयोग्यानि वहति प्रवालपाटलानि प्रवालान्यशोकः । अमूनि च द्रविडविलासिनीताटंकरचनोचितानि शुकच्छदछवि हरंति हरंति विलोचनानि नालिकेरपत्राणि । इयं च तुलितविदर्भकामिनीपीनोरुस्तंभविभ्रमा स्तम्भयति वीक्षणानि राजरंभा । ( अन्यतो विलोक्य निर्वर्ण्य च )

हृद्यामद्यानुधावत्यधरदलरुचारंजितां दंतपंक्तिं
गौडीनां प्रौढपाकक्रमपरिदलितैः स्वैः फलैरुच्छिलिंगः[1] ।
निष्टप्तस्वर्णवर्णच्छविभिरवहितघ्राणलेढव्यगंधैः
काश्मीरीगण्डशोभां कवलयति फलैर्निर्मलैर्मातुलिङ्गः॥१६॥

१ दाडिमः ।

( अन्यतो दृष्ट्वा ) इतश्च ।

रमयति हरिद्वंतोद्भिद्भैर्विलूयविकाशितै-
रलकरचना चोलस्त्रीणां मुखेष्वेव तानितैः ।
अनतिजरठैः पुष्पैरेषां जपाकुसुमारुणै-
र्विधुरमुकुलान् बंधूकांस्तान्मनो बहु मन्यते ॥ १७ ॥

इतश्च ।

असौ शिरीषः कुसुमानि धत्ते
सुलोचनाबाहुलतामृदूनि ।
प्रियाकपोलच्छुरणार्चनीयै-
र्विभाति लोध्रः सुमनःपरागैः ॥ १८ ॥

( स्पर्शं रूपयित्वा ) अहो मनोज्ञक मंदाकिनीतीरोद्यानमारुतस्य । अत्र हि ।

वर्षंतः प्रविकासिकेसररजश्चूर्णान्मधुश्चोतिनः
कर्षंतः कलकंठकंठकुहराच्चूतासवार्द्रा गिरः ।
सद्यः खंडितमानिनीहृदयगान् मंदानिलांश्चंदना-
नालेपान् परिशोषयंति न परं धैर्यावलेपानपि ॥ १९ ॥

**विदूषकः**—वॅअस्स इदो दक्खिअदु मंदाइणिं ।

**राजा**—( विलोक्य निर्वर्ण्य च ) इयं खलु मदोद्धरोद्दाममल्लिकाक्षपक्षविक्षेपक्षोभणप्रक्षरदरविंदमरंदावस्कंदसांद्रसलिला सलीलविलोठमानपाठीनपरिपाटीजाटिलकल्लोला कलक्वणितानुमीयमानेंदिरवृंदांदोलितविनिद्रेंदीवरवना विहारकेलीकलभायमानकोकनिनदमुखरितविकचकोकनदकुटीरकोटरा सकौतुकवरटारटनानुसरणसभ्रांतकलहंसकुलसंकुलोत्फुल्ल-

१ वयस्य इतः पश्यतु मंदाकिनीम् ।

पुंडरीकखंडा चटुलखंजरीटकुटिलपदपंक्तिचित्रितपर्यंतसैकततला प्रसादतुलितानिर्मलस्फाटिकतटा विघटितसौगंधिकगंधसंबंधबंधुरितगंधवाहा नंदयति नयनानि मंदाकिनी। तथाहि।

वासयंति मुहुरत्र मूर्च्छता
सौरभेण युगपत्समीरणम्।
स्पंदमानमकरंदमेदुरा–
ण्युत्फलानि च महोत्पलानि च ॥ २० ॥

अपि च–

क्वचिज्जंबूकुंजप्रतिहतिपरावर्तितजवः
क्वचिद् वृत्तावर्तभ्रमवशपरिभ्रांतसलिलः।
क्वचिद्रोधःपातद्रुतविघटमानोर्मिनिवहः
प्रवाहो जान्हव्याः प्रथयति गभीरं कलकलम् ॥ २१ ॥

इतश्च।

विसृत्य लहरीजलं नभसि दूरमत्रोत्थिता
विवर्तितनिशातशुभ्रकरवालधारोज्ज्वलाः।
झषाश्चटुलचंक्रमास्त्सपदि मीनकेतोरपि
स्फुरंत इव केतवः किमपि कौतुकं तन्वते ॥ २२ ॥

विदूषकः–( निर्वर्ण्य ) भो वअस्स दक्ख दाव इदो पाडिवचंदकोडि-

---

१ हंसविशेष। २ शीघ्र। ३ भो वयस्य पश्य तावदितः प्रतिपच्चद्रकोटिकुटिलविकटदंष्ट्राकरालमुखकुहरा· समुत्तंभितकर्कशहस्ता· दृश्यंते तरत इव द्विघटा ( गजा )। भयपलायितसकलजलचरानिकरा· मकरा·। इतश्च भ्रमणरभसविव्यजलविहंगपरिहियमाणपारिसरा दीर्घतरपुच्छाकदर्गभिताः दधति सौहित्यं। निरंतरभ्रमतसलिलपूरा पुष्पसत्त्वा। इतश्च। मज्जनोत्सुकजनाचतरणदूरोत्सारितशैवालाः निर्मूलितजंबाला· प्रसादप्रकटप्रीतच्छादिततीरतरुनिकरा साञ्जिता इव दर्पणा,

कुडिलविअडदाडाकरालमुहकुहरा समुत्तंभिदकक्कसहत्था दीसंति तरंता विअ दोघंटा । भअपलाइज्जंत सअलजलअराणिअरा मअरा । इदो अ भमलरभसभाअंतजलविहंगपरिहरिज्जंतपरिसरा दीहरपुरसक्कंदगब्भिणा दंति ओहित्थं णिरंतरभमंतसलिलऊरा तालूरा । इदो अ मज्जणागाअजणावतरणदूरोसारिअसेवाला णिम्मूलिअजंबाला पसादपाअडपडिच्छंदिअतीरतरुणिअरा सज्जिदा विअ दप्पणा, जेणहव्विए हरंति हिअआइं। विसत्थविहरंतपाढीणडिंभजूथा तित्था । इदो अ मन्दवायंतमंदाइणीपवणदुव्वंतपेरंता सुव्वंतमहुरसारसंणिणादमणहरा अक्खिवंति लोअणाइ णिअडावगासगआअवावडासीसितरंगआ तडकडुंगआ ।

राजा—(विलोक्य निर्वर्ण्य च) अहो स्पृहणीयता जान्हव्याः । अत्र हि ।

तरंगप्रेंखोलव्यतिकरपरावर्तितदलं
दृशा सारंगाक्ष्यास्तुलयति विलोलं कुवलयं ।
स्तनौ तस्याः कार्तस्वरकलशसौभाग्यजयिनौ
स्मरक्रीडादोलौ स्मरयतितरां कोकमिथुनम् ॥ २३ ॥

( सविशेषोत्कंठम् ) ।

यद्वक्रीकरणं करेण सदयं यद्वा नखोल्लेखनं
गण्डाभ्यामुपगूहनं यदसकृद्वक्त्रेण यत्पीडनम् ।
आघ्राणं कुचयोर्यदुत्पुलकयोर्यच्चार्पणं नेत्रयो-
र्यद्वा चूचुकचुंबनं व्रजतु तद्द्रष्टुं च तां नाप्नुमः ॥ २४ ॥

विदूषकः—वंअस्स अत्थि तिस्सा दंसणोवाओ ।

---

१. जानव्याः हरंति हृदयानि । विस्रब्धविहरत्पाठीनडिम्भयूथाः तत्र । इतश्च मंदवहन्मंदाकिनीपवनधूयमानपर्यंताः श्रूयमाणमधुरसारसनिनदमनोहरा आक्षिपंति लोचनानि निकटावकाशगतातव्यापृतशिशिरतरंगाः तटकुंजाः । २ वयस्य अस्ति तस्याः दर्शनोपायः ।

**राजा**—वयस्य कथमिव ।

**विदूषकः**—भणिदं खु अम्हाणं सोविदल्लेण लद्धेण, आगमिस्सिदि सोहग्गमज्जणत्थं एत्थ कासीराअउत्तित्ति ।

**राजा**—तदपि द्रक्ष्यामः ।

( निर्वर्णयतौ परिक्रामत )

( तत प्रविशति सुलोचना नवमालिका चेटी च )

**नवमालिका**—पिअसहि जाव मज्जणवेला ताव एत्थ गंगातीरुज्जाणे दिट्ठिओ विणोदस्सम्ह ।

**सुलोचना**—जहं पिअसहि भणादि ।

**नवमालिका**—इदो ईदो पिअसहि । ( सर्वाः परिक्रामंति )

**चेटी**–(निर्वर्ण्य)।अहो इमस्स णिरंतरुप्फुल्लसराअकुसुमदाए रत्तकंवलोगुंठिदेहिं पिव पालिभद्दुमेहि णिरंतरुप्फुलदाए कणंतकणअपच्छदसंछण्णेहिं पिव कंचणकोविआरपाअवेहिं णिब्भरविआसिअकसणगुच्छदाए इंदणीलमणिकिरणसवलिदेहिं पिव तापिच्छेहि णिविडविहडिअसामलमउलदाए णिम्मलमरगअमोहबलइदेहिं पिव सरिसएहि घणपिणद्धधवलमंजरीसहस्सदाए मोत्तिअणिअरगुच्छेहिं पिव विअसिअसिंधुवारेहि दंसिदेण पंचवण्णअकुसुमविच्छुएण सज्जीवकरंत विअ पंचवाणाइ सुहविहारजोगसमग्गपुलिणसोहिअस्स पत्तलवहलकेअइवइवेत्थिअस्स रमणिज्जदा गगातीरुज्जाणस्स ।

---

१ भणित खल्वस्माकं सौविदल्लेन लब्धेन । आगमिष्यति सौभाग्यमज्जनार्थं अत्र काशीराजपुत्रीति । २ प्रियसखि यावन्मज्जनवेला तावदत्र गंगातीरोद्याने दृष्टिर्विनोदयिष्यामः । ३ यथा प्रियसखी भणति । ४ इत. इतः प्रियसखि ५ अहो अस्य निरंतरोत्फुल्लसरागकुसुमतया रत्नकवलावगुंठितैरिव । पारिभद्रद्रुमै निरंतरोत्फुल्लपीतफुल्लतया क्वनत्कनकप्रच्छदसछन्नैरिव काचनकोविदारपादपै निर्भरविकमितकृष्णगुन्छतया इद्रनीलमणिकिरणसवलितैरिव तापिच्छैर्निविडविघटितश्यामलमुकुलतया निर्मलमरकतमयूखवलयितैरिव शिरीषै घनपिनद्धधवलमंजरीसहस्रतया मौक्तिकनिकरगुच्छैरिव विकसितसिंधुवारै. दर्शितेन पंचवर्णकुसुमविच्छदेन सजीकुर्वत इव पचवाणान् सुखविहारयोग्यसमग्रपुलिनशोभितस्य पत्रिलवहलकेतकीवृतिवेष्टितस्य रमणीयता गगातीरोद्यानस्य ।

**नवमालिका**—( पुरो निर्दिश्य ) रमणीअं खु एअं सुहासिसिरच्छाअं पिअंगुपाअवमूलं । जाव एत्थ मुहुत्तअं उवविसह्म ।

**सुलोचना**—जं पिअसहिए रोएदि । ( सर्वा उपविशंति )

**नवमालिका**—हला सैरालिए जाणाहि दाव महत्तरिआहिं किरंतस्स केरसी पउत्ति मज्जणसंविहाणस्सत्ति ।

**चेटी**—जं पिअसही भणादि । ( उत्थाय निष्क्रांतौ )

**सुलोचना**—( आत्मगतं ) कहं रमणिज्जोवि एस उद्देसो तद्दंसणादो पहुदि उम्मणाअंतस्स ण देइ णिउउइं हिअअस्स । जदो दीसंतावि एत्थ उप्फुल्लमंजरीपुंजगुंजितमहुअरा इमे सहआरा सुमरावेंति तं चेअ तेण जणेण अलंकियपासं सहआरपाअवं । वाअंतावि एदे सरअसहआरपराअ-सुराअसुरहिणो गंधवाहिणो सुमरावेंति तं चेअ तज्जणसरीरपस्समहग्घविदं समीरणं इमस्सिं च तं चेअ जणं धारअंति ण किंपि अण्णं लग्गादि चरि-दावआसे हिअए । इमाइं अ तद्दंसणसुहदुल्ललिआइ लोअणाइ उम्मिसंतावि ण पेक्खंति अत्थंतरं । इअं अ तदो पहुदि किंपि किंपि सुत्तअंती ण पारेदि इदो मुहुत्त मुहु--

---

१ रमणीयं खल्वेतत् सुखशिशिरच्छायं प्रियंगुपादपमूलं यावदत्र मुहूर्तमुपविशाम । २ यत् प्रियसख्याः रोचते । ३. हला सरलिके जानीहि तावन्महत्तारिकाभिः क्रियमाणस्य कीदृशीः प्रवृत्तिः मज्जनसंविधानस्येति । ४. यत् प्रियसखी भणति । ५. कथं रमणीयोपि एष उद्देश तद्दर्शनात्प्रभृति उन्मनायमानस्य न दधाति निवृतिं हृदयस्य यतो दृश्यमाणा अप्यत्र उत्फुल्लमंजरीपुंजगुंजन्मधुकरा इमे सहकारा स्मारयंति तमेव तेन जनेनालंकृतपार्श्वं सहकारपादपं । वातोपि एते सरलसहकारपराग-सुरागसुरभिणो गंधवाहाः स्मारयंति तमेव तज्जनशरीरस्पर्शमहार्घितं समीरणं । अस्मिंश्च तमेव जनं धारयति न किमप्यन्यद् लगति चरितावकाशे हृदये इमे च तद्दर्शनसुखदुर्ललिते लोचने उन्मिषती अपि न पश्यतोऽर्थांतरं । इयं च ततः प्रभृति किमपि किमपि सूत्रयंती न पारयति इतो मुहूर्त मुहुः ।

वाहुंदिदुव्वंदीकदव्व तेण जणेण चिंतावराई । अह अ अत्थदो एसा णिसग्गबला चिंता । अहं चेअ खु तेण तुलग्गामेत्तदंसणसुहदाइणा महा-वाहुणा आभिजाइविरुद्धं कण्णआणं आभिद्दवं अगणअंतेण दक्खंतस्सवि लोअणस्स कदम्हि करग्गहेण एक्कपदेकमारिआ एसो अ तस्स आदिक्कमो जं अहं चेअ सअं वरिदुकामा पढमं चेअ तेण णअणाणंददाणपुण्णचंदेण

१. विहृतिदुर्वदीकृतेव तेन जनेन चिंतावराकी । अथ च अर्थत एषा निसर्गवला चिंता अहमेव खलु तेन यदृच्छामात्रदर्शनसुखदायिना महा-वाहुनाभिजातविरुद्धं कन्यानामभिद्रवमगणयता पश्यतोपि लोचनस्य कृतास्मि करग्रहेणैकपदे कमरिका । एष च तस्यातिक्रमो यदहमेव स्वयं वरितुकामा प्रथममेव तेन नयनानंददानपूर्णचंद्रेणोत्फुल्लपुंडरीकसदृक्षै स्निग्धपक्ष्मलधवलदीर्घैः स्वयं वृतास्मि चक्षुभि ।एप च मे विवेकमूढो मनोरथो यत् स एव भवतु सर्वोपि दिवस, सैव भवतु सकलापि वेला, स एव भवतु सर्वोप्युद्देश', सा एव भवतु सकलापि दिशा यस्मिन् क्षणमात्रे दर्शनसुखमासीत् । किं पुनः यदि अन्येपि अलीकलज्जाव्यसनेऽवधीरितसाध्वसेऽवगाहिते यथेच्छप्रेक्षणसाहसे द्वे लोचने लभेयेति । को वा तस्य प्रत्युपकारो दर्पणस्य येन प्रतिच्छता तस्य प्रतिच्छदं दत्त मे यथे-च्छदर्शनसुख लोचनयो· । अथवा लुब्ध खलु स दर्पणो येन क्षणातर एव गोपितं तस्य प्रतिच्छदकम् । निर्दाक्षिण्यश्च स जनो येन मुहूर्तमात्रात्तिरोभवता प्रतिच्छदकदर्शनमपि आत्मनो न सोढं । अथवा अहमेवात्रापराध्यामि याहं सपूर्ण-दर्शनमात्रेणापि तं जनमसंभाव्य पश्यत एव तस्य यथापुरं हि प्रस्थिता । कथ वा अत्र आत्मनोपि न प्रभवाति लज्जेमि । याहं तद्दर्शनरमणीया भूमिमावर्त्य पुनर्द्रष्टुमपि न लभे । श्रूयते च मया सयौवनस्य जनस्याभिमतजनदर्शने उत्खंडि-तधैर्यार्गल उद्वासितविनयव्यसनेऽपनीतलज्जातिरस्करणीको दुःसहारंभकर्कशो मदनो नाम कोपि अंत करणमधिक्षिपतीति । तत् किलैतत् मयेदानीमनुभाव्यते येन मे अ-पर इव तत प्रभृतिचिंता, अन्य एव संतापगर्भो मनसो विकार· । इतश्च मे अद्य प्रवर्तते वैलक्ष्यं यत्तद्दर्शनसमये संमुखासीनया एतया नवमालिकया तत्क्षणधैर्यस्ख-लनविलक्षो मे भावो लक्षितो न वेति ।

उप्फुल्लपुण्डरीअसरिच्छेहि सिणित्थपमहलधवलदीहरेहि सअं वुददह्मि चक्खूहिं एसो अ मे विवेअमूढो मणोरहो जं सा एव्व होदु सव्वोवि दिअहो। सा एव्व होदु सअलावि वेला, सो एव्व होदु सव्वोवि उद्देसो, सा एव्व होदु सअलावि दिसा। जहिं खणमेत्त दंसणसुहं आसि। किं उण जइ अण्णाइ वि अलीअलज्जावसणाइ ओहिरदसज्झसहेवगाइ जाहिच्छपेच्छण साहसिआइ दोण्णि लोअणाइ लहेअति। कोवा तस्स पच्चुवआरो दप्पणस्स, जेण पडिच्छंतेण तस्य पडिच्छंदअं दिण्णं मे जाहिच्छदंसणसुह लोअणाणं। अहल लुद्धो खु सो द्प्पणो जेण खणंतरि चेअ गोपिअं तस्स पडिच्छंदअं। णिद्दक्खिणो अ सो जणो जेण मुहुत्तमेत्तादो तिरोभवंतेण पडिच्छंद अदंसणंपि अप्पणो ण सहिदं। अहव अहं चेअ एत्थ अपरज्झामि जा अहं संपुण्ण ( दंसण )मेत्तएणापि तं जणं असभाविअ दक्खंतस्स चेअ तस्स जहपुरं हि पत्थिदा। कहं वा एत्थ अत्तणोपि ण पभवति लज्जेमि जा अहं तद्दंसणरमणिज्जं भूमिं आवात्तिअ पुणो दंसिदुंपि ण लहेमि। सुव्वइ अ मए सजोव्वणस्स जणस्स अभिमदजणदंसणे उक्खंडिदधीरग्गलो उव्वासिदाविणअवसणो अवणीदलज्जतिरक्खरणीओ दूसहारंभकक्कसो मअणो णाम कोवि अंतक्करणं आक्खिवदिति। तं किर एदं मए दाणिं अणुहविज्जादि जेण मे अवर एव्व अदो पहुदि चिंता। अण्णो एव्व संतावगब्भो मणस्स विआरो इदो अ मे अज्ज पवत्तादि वेलक्ख जं तद्दंसणसमए सम्मुहासीणाए इमाए णोमालिआए तक्खणधीरक्खलणाविलक्खो मे भावो लक्खिदो ण वेत्ति।

**नवमालिका**—( विलोक्य ) पिअसहि किंवि चिंतआंति विअ लक्खिज्जासि।

**सुलोचना**—( सवैलक्ष्यं ) जइ आत्थि कहं तेण कहइस्स।

---

१ प्रियसखि किमपि चिंतयतीव लक्ष्यसे। २ यद्यस्ति कथं तेन कथयिष्ये।

**नवमालिका**—णे खु जं चिंतिज्जइ तं कहेदव्वंति णिओओ। जदा खु अवरं पडिवद्धअं णत्थि तदा णं चिंतिज्जंतं कहिज्जइ कण्णआजणस्स उण सुसिणिद्धेवि जणे पडिवद्धदि भावावेदणं णिसग्गसिद्धा लज्जा। ता समाद्धिदं मए लज्ज एव्व तुह अंतक्करणं णिगुहावेदित्ति। जदो लक्खिज्जदि एव्व सढिलणिस्सहेहिं अंगेहिं अदिण्णसेरसंभासणेण मुहेण थिमिदजिह्मेहि अ लोअणेहिं अणुवद्धिजंति कावि दुरंता तुह चिंता। हिओ णअरदेवदा-जत्तापाढीणिअत्ति आदिवेला तिस्सा आरंभोत्ति तक्केमि जेण तदो पहुदि अण्णारिसं ते भासिअं, अण्णारिसिअ दिट्ठि, अण्णारिसं अ सरीरअं, अण्णारिसे एव्व तुमंवि लक्खिज्जासि। तदो अ एक्कावि इमा अदीदा जामिणी अत्थं गमअंती विवेअं। अंधराअंती अंतक्करणं, अभिद्दवंती णिद्दा-सुहं, णिम्मूलअंती धीरं, उम्मीलअंती संतापं, सहीजणस्सवि लज्जाभारेण अणुण्णामिदमुहिए अजाणंतीए कहणिज्जं, अमुणंतीए करणिज्जं कहं कहंपि तुह गदा।

**सुलोचना**—( सवैलक्ष्यं सेर्ष्यं च ) किंएदं किंवि हिअए काऊण विअकसेहि।

---

१ न खलु यच्चिंत्यते तत्कथयितव्यमिति नियोगो यदा खल्वपरं प्रतिबंधकं नास्ति तदा ननु चिंतित कथ्यते, कन्यकाजनस्य पुनः सुस्निग्धेपि जने प्रतिबध्नाति भावावेदनं निसर्गसिद्धा लज्जा। तस्मात् समर्थित मया लज्जैव तवांतःकरण निगूहयति इति। यतो लक्ष्यत एव शिथिलनिस्सहैरंगैरदत्तस्वैरभाषणेन मुखेन स्तिमितजिह्माभ्या च लोचनाभ्यामनुबध्यमाना कापि दुरता चिंता ह्यश्व नगरदेवता-यात्राप्रभृति अतिवेलस्तस्या आरंभ इति तर्कयामि। येन ततःप्रभृत्यन्यादृशं ते भाषितं अन्यादृशी च दृष्टिः अन्यादृशं च शरीरं, अन्या दृश्येव त्वमपि लक्ष्यसे। ततश्चैकापि इयमतीता कामिनी अस्त गमयंती विवेक अंध-कारयंती अंतःकरणमभिद्रावयंती निद्रासुखं निर्मूलयंती धैर्यं उन्मीलयती सं-तापं सखीजनस्यापि लज्जाभारेणानुन्नामितमुख्या जानंत्या कथनीयमजानंत्या करणीयं कथं कथमपि त्वया गमिता। २ किमेतत् किमपि हृदये कृत्वा विकत्थसे।

**नवमालिका**—पिअसहि अलं ते भएण जाव सणिहेण वलीअं खु मे तुस्सइ अप्पा ठाणे एव्व ओलग्गा दिट्ठित्ति। महत्तेण भाअधेएण कण्णआणं अहिरूवतमो पई लब्भादि। तच्च पुण्णंवि केवलं माणुसोत्ति मुणेहि। जंदो तारिसं उज्जलमहुरं रूवं, तारिसं उदारगहीरं सत्तं, तारिसी अधीर-ललिदा पइडि ण उत्तमक्खत्तियअदो अण्णस्स संभाविआदि। अह अ। पिअसहि तुह एव्व सअंवरजत्ताणिमित्तं आअदेण होदव्वं तेण। ता णिच्चिंता दाणिं होहि। कल्लं खु तं चेअ सअं वरिस्सासि।

(सुलोचना सलज्जं वाष्पं विदार्य तूष्णीमास्ते)

**नवमालिका**—अदिउज्जुए महवि णाम एव्वं लज्जंती कहं ते हिअआदो ण लज्जेसि।

**सुलोचना**—पिअसहि खंतव्वो एस लज्जापरवदीए मह भाव-गूहणादिक्कमो।

**नवमालिका**—सहावसिद्धेपि अ कण्णआणं इमस्सि अत्थे कहं णाम पिअसही अवरज्झदि।

**विदूषकः**—(कर्णं दत्वा) वअस्स एत्थ एव्व पिअंगुपाअवमूले इत्थिआजणालाओ सुणिज्जइ।

---

१. प्रियसखि अलं ते भयेन यावत् स्नेहेन बलवत्खलु मे तुष्यत्यात्मा स्थान एवावलग्ना दृष्टिरिति महता भागधेयेन कन्यकानामभिरूपतमः पतिर्लभ्यते तच्च पुण्यमपि केवलं मानुषस्येति जानीहि यतस्तादृशमुज्ज्वलं मधुरं रूपं तादृशमुदार-गंभीरं सत्त्वं तादृशी च धीरललिता प्रकृतिः नोत्तमक्षत्रियादन्यस्य संभाव्यते। अथ च। प्रियसखि तवैव स्वयंवरयात्रानिमित्तमागतेन भवितव्यं तेन। तस्मान्नि-श्चिंतेदानीं भव। काल्य खलु तमेव स्वयं वरिष्यासि। २. अति ऋज्विममापि नाम एवं लज्जंती कथं ते हृदयान्न लज्जसि। ३. प्रियसखि क्षंतव्य एष लज्जापरवत्या मम भावगूहनातिक्रमः। ४. स्वभावसिद्धेपि कन्यकानामस्मिन्नर्थे कथं नाम प्रिय-सखी अपराध्यति। ५. वयस्यात्रैव प्रियंगुपादपमूले स्त्रीजनालापः श्रूयते।

राजा—( आत्मगतं ) अपि नाम सा भवेत् । ( प्रकाशं ) यावदमुना प्रलंबविटपेनाश्मंतकपादपेनातरितः पश्यामि ( तथा दृष्ट्वा सहर्षं ) वयस्य दिष्ट्या वर्धसे । सैव खल्वियं ते प्रियसखी ।

विदूषकः–( दृष्ट्वा ) केहं[1] एसा तत्तहोदी कासीराअउत्ती ।

राजा—( निर्वर्ण्य सोत्कंठं )

इयं सा लावण्यामृतसरिति यस्यां मम दृशौ
निरुच्छ्वासं मग्ने पदमपि लभे तेन तरितुं ।
स्थिरीभूतं यस्यां प्रकृतितरलं संप्रति मनो ।
यया कामः कामं हृदयमिदमंतर्व्यथयति ॥ २५ ॥

नवमालिका—महाभागो[2] खु सो जणो जो एव्वं णाम पिअसहीए हिअए सदापि अ वट्टइ ।

सुलोचना–( सलज्जं ) सहि[3] कीस मं वाहेहि । साविदा खु से मए जइ मे पुणोवि किवि असंबंधं जंपिहिस्सि ।

विदूषकः–वअस्स[4] तुह एव्व उत्तंतो वट्टदित्ति तक्केमि ।

राजा—अहो स्पृहणीयः कन्यकानां व्रीडाव्यतिकरः ।

तथाहि—

निरुंधाना कूटं किमपि हृदये वस्तु लिखितं
तदस्वस्थैर्भावैः पुनरनुमिमानां प्रियसखीं ।
सलज्जं जल्पंती परिमृदितशुष्काक्षरमसौ
विलक्षस्मेरास्या कथमपि तदस्याः स्फुटयति ॥ २६ ॥

( पुनर्निर्वर्ण्य ) अहो सर्वावस्थासु कामनीयकमस्याः ।

---

१. कथमेषा तत्रभवती काशीराजपुत्री । २ महाभागः खलु स जन य एवं नाम प्रियसख्या हृदये सदापि च वर्तते। ३. सखि कस्मान्मां बाधसे । शापिता खल्वसि मया यदि मा पुनरपि किमप्यसंबंध जल्पसि ४. वयस्य तवैव वृत्तांतो वर्तते इति तर्कयामि ।

इदं हि—

जरठरविमयूखतापताम्यत्-
किसलयदुर्बलकोमलांगयष्ट्यां ।
चकितहरिणशावलोचनाया-
मभिरमते हृदयं सुलोचनायाम् ॥ २७ ॥

**नवमालिका**—को[1] वा एत्थ असंबंधं मंतेदि सुसंबंधं चेअ खु एदं भविस्सादि ।

**सुलोचना**—( स्वगतं ) अमोहे[2]वादिणी होहि ।

**राजा**—इयं खल्वखंडितपराक्रमस्य मकरकेतोरसंहार्यशौर्यहेतुः सुमहानवष्टंभः ( आकाशे लक्ष्यं बद्ध्वा ) अयि भोः कुसुमधन्वन् वृथा कत्थसे इदमुपालभ्यसे ।

यत्रैते स्फुरतः प्रमथ्य विनयं दीर्घे भ्रुवौ सुभ्रुवो-
यत्रैते हरतः प्रसह्य तरले धैर्यग्रहं लोचने ।
यत्रैषास्ति विमोहनाय जगतस्तत्र स्मर श्रूयतां
कोदंडे च शरेषु च त्वयि च भोः स्यात्पौनरुक्त्यं परम् ॥२८॥

**सुलोचना**—( स्वगतं ) अवि[3] णाम सो जणो अज्जवि दंसणसुहं देज्ज ।

**नवमालिका**—( विभाव्य स्वगतं ) कहं[4] एसा चिंताभरेण वलिअं खिज्जइ होदु जाव इमाए हिअअं आक्खिवामि । ( प्रकाशं ) पिअ[5]सहि एसा खु सह

१. का वात्रासंबंधं मंत्रयते सुसंबंधमेव खलु एतद् भविष्यति । २. अमोघवादिनी भव । ३. अपि नाम स जनः अद्यापि दर्शनसुखं दास्यति । ४. कथमेषा चिंताभरेण बलवत् खिद्यते भवतु तावदस्या हृदयमाक्षिपामि । ५. प्रियसखि एषा खलु सह समुच्चरत्कुररकारंडवकेलिकलहकलकलगंभीरेण शब्दापयतीव मारुतेन भागीरथी । तस्मादुत्तिष्ठ तावत् यावत् सरलिका आगमिष्यति तावन्मंदाकिनीं पश्यावः ।

समुच्चरंतकुररकारंडवकेलिकलअलगंभिणेण सद्दावेदि विअ मारुदेण भाईरहि। ता उट्ठेहि दाव जाव सरलिआ आअमिस्सादि । ताव मंदाअर्णी दक्खिह्म ।

**सुलोचना**—जं पिअसहीए रोअदि[1] । ( उत्तिष्ठतः )

**नवमालिका**—इदो[2] इदो पिअसहि ( परिक्रामतः )

**राजा**—( निर्वर्ण्य ) कथं समग्रसाधनः संप्रति संग्रामयते कुसुमधन्वा। मम हि—

> अस्याः कामः कठोरः स्तनतटयुगले नाभिरध्रे गभीरो
> विस्तीर्णः श्रोणिबिंबे गतिषु कृतपदो हस्तयोर्दत्तहस्तः ।
> जातोत्कंठोथ कंठे मुखमनु सुमुख काममोष्ठे स रागो ।
> विभ्रांतश्चायमक्ष्णोर्जनयाति हृदयस्याव्यवस्थामवस्थाम् २९

**विदूषकः**—वअस्स[3] इदो एव्व कहं आअच्छाति ।

**राजा**—सखे किमत्र कुर्मः । अथवा स्वयमासीदंत्योरनयोरदुष्ट एव याट्टच्छिक उपनिपातः ।

**सुलोचना**—( अग्रतो राजानं दृष्ट्वा ससाध्वसं समौत्सुक्यं चात्मगतं ) अह्मो[4] सो एव्व एत्थ समाणीदो देव्वेण ।

**नवमालिका**—( राजानं दृष्ट्वा अपवार्य ) पिअसहि[5] दिट्ठिआ वड्ढेसि सो एव्व जणो एत्थ समाणीदो देव्वेण।

**सुलोचना**—( सलज्जमपवार्य ) हला[6] किं एत्थ करिअदु ।

**नवमालिका**—( अपवार्य सस्मितं ) इमं एव्व[7] णं पुच्छसु ।

---

१. यत् प्रियसख्या रोचते । २. इतः इत प्रियसखि । ३. वयस्य इत एव कथमागच्छतः । ४. अहो स एवात्र समानीतो दैवेन । ५. प्रियसखि दिष्ट्या वर्धसे, स एव जनोत्र समानीतो दैवेन । ६. हला किमत्र क्रियतां । ७. इममेव ननु पृच्छ ।

**सुलोचना**—( सेर्ष्यमपवार्य ) हलो पुणोवि किं असंबद्धं भणासि। ( अन्यतो गंतुमिच्छाति )।

**नवमालिका**—पिअँसहि मा मा कुप्पेहि ( हस्ते गृह्णाति )

**राजा**—( स्वगतं ) अयमत्रावसरः। ( उपसृत्य ससांत्वनम् ) अयि सरले—

**येन व्यलीकेपि कृतेन कोपो दाक्षिण्यरुद्धो लभतेऽवकाशं।**
**तस्मिन् जनेऽस्मिन्नकृतापराधे कुतो वृथा त्वं कुपिता प्रयासि॥३०॥**

**विदूषकः**—कँहं[3] कोवणा अत्तहोदी।

**नवमालिका**—अँदक्खिणे कहं अपुव्वदंसणसंभावणीअस्स इमस्स जणस्स वअणं लंघेसि।

**राजा**—सखि कुतः खल्वसौ कुपिता।

**नवमालिका**—इमं एव्वँ पुच्छइ।

( सुलोचना सेर्ष्यं नवमालिकां पश्यति )

**राजा**—सुंदरि प्रसीद प्रसीद।

( नेपथ्ये )

इदो[6] पिअसहि

**नवमालिका**—( कर्णं दत्वा ) पिअँसहि सरलिआ णं सद्दावेइ ता इदो सिग्घं एहि।

**सुलोचना**—( स्वगतं ) कँहं एत्तिअंवि विग्घिदं। का गई।

---

१. हला पनरपि किमसंवद्धं भणसि। २. प्रियसखि मा मा कुप्य। ३. कथं कोपनात्रभवती। ४. अदक्षिणे कथमपूर्वदर्शनसंभावनीयस्यास्य वचनं लंघयसि। ५. इमामेव पृच्छ। ६. इतः प्रियसखी। ७. प्रियसखि सरलिका ननु शब्दापयति तस्मादितः शीघ्रमेहि ८. कथमेतावदपि विघ्नितं। का गतिः।

( परिक्रम्य निष्क्रांते )

राजा—अहो क्षणदर्शनमपि न सोढव्यमीर्ष्यालुना दैवेन ।

विदूषकः—वअंस्स णिच्चिंतो दाणिं होहि । असाहारणो खु तत्त-होदीए तुवम्मि बहुमाणो ।

राजा—अतर्कितोपनतेन च दर्शनेन प्रतिक्षणविधीयमानविभ्रममाम्रे-डितं तस्याव्रीडितम् ।

तथाहि—

स्तनतटसमुत्क्षिप्ता मुक्तावली परिवर्तिता
सुनिहितमपि स्रष्टुं कर्णोत्पलं प्रहितः करः ।
विनमितमुखं सख्या सव्याजमंतरितं मुहु-
र्मयि च निपतद्दृष्टौ न्यस्ते दृशौ स्तनचूचुके ॥ ३१ ॥

(विचिंत्य सौत्सुक्यं) अहो अभिरूपं तस्याः प्रियसखीं प्रति प्रणयरसार्द्रं कुपितं ।

तथाहि—

नैवाधरेण स्फुरितं न रक्ते विलोचनेन स्खलितं च गत्या ।
तथापि कोपः परिभावितोऽस्य भिन्नक्रमेणैव निरीक्षितेन ॥ ३२ ॥

( अग्रतो विलोक्य सोत्कंठं )

क्षणमिह मदिराक्ष्यामग्रतो मे स्थितायां
स्तनतटपरिणाहात्प्रच्युतस्याकुतोपि ।
पथि च विटपिलग्नस्योत्तरीयांचलस्य
क्षणकृतगतिविघ्नस्यैष भूयः स्मरामि ॥ ३३ ॥

( सांतस्तापं निश्वस्य ) अहो दुर्विषहता प्रियाविरहव्यथायाः । येनानु-

---

१ वयस्य निश्चित इदानीं भव । असाधारणः खलु तत्र भवत्यास्त्वयि बहुमानः ।

पदमेव समुत्पादितसर्वांगीणपरितापा शिरोवेदनामिवापादयति । ( सविशेषोत्कंठं । )

भवसि भवसि मूर्धन् सत्यमेवोत्तमाङ्गं
यदि सकृदपि तस्यास्सेर्ष्यमुत्क्षिप्तपाणेः ।
रतिकलहविमर्देष्वर्चति त्वां प्रियाया-
स्स परमपरिहार्यः पारिहार्यप्रहारः ॥ ३४ ॥

विदूषकः—भो वअस्स[1] समासण्णो मज्झाण्हो जाव एण्हिं खंदावारं एव्व गच्छेमो ।

राजा—( नभो विलोक्य । ) कथं गतमहर्दलम् ।

तथाहि ।

अहमिह सहसानः संगरन् बर्हभारं
तरुविटपनिषण्णस्सेवते स्वापसौख्यम् ।
श्रयति तपनतापादुत्रसन्नत्र चासौ
घननलिनपलाशाभ्यंतरं मंदसानः ॥ ३५ ॥

किंच ।

प्रासादोदरवासगेहतलिमेष्वद्यातपो द्वेजिन-
श्चर्चाचंदनकर्दमार्द्रतनुभिः सार्धं प्रियाभिः प्रियाः ।
क्षौमांतव्यजनैः करव्यतिकराः संविज्यमानैर्मिथः
कुर्वंतः सुरतश्रमव्यपनयं तंद्रालवः शेरते ॥ ३६ ॥

विदूषकः—इदो[2] इदो पिअवअस्सो ।

( इति परिक्रम्य निष्क्रातौ )

इति श्रीकवि हस्तिमल्लेन विरचिते कौरवपौरवीयनाटके गंगामज्जनं नाम द्वितीयोङ्कः समाप्तः ॥ २ ॥

---

१ भो वयस्य समासन्नो मध्यान्हः यावदिदानी स्कंदावारमेव गच्छावः ।
२ इत इतः प्रियवयस्यः ।

# तृतीयोऽङ्कः ॥ ३ ॥



( ततः प्रविशति विटः )

विटः—अहो अनन्यसाधारणी वाराणस्याः समृद्धिः ।

अत्र हि—

गुण एवाहार्यं भवति पुरुषाणां बहुमतं
स्त्रियः स्वैरं हार्याः प्रणयचतुरैश्चाटुवचनैः ।
धनं पात्रे दत्तं न खलु वसुगुप्तिर्धनवशां
कवीनां काप्यन्या भणितिरभिजाता विजयते ॥ १ ॥

अतश्च—

वणिजो जित्वरीमाहुः सत्यं वाराणसीमिमाम् ।
यदेनया व्यजीयंत विश्वान्यनगरश्रियः ॥ २ ॥

विशेषतः पुनरद्य सुलोचनास्वयंवरयात्रायामन्यैव कापि शोभा काशीराजधान्याः ।

तथाहि—

अभ्युक्ष्यंते सरसकुसुमाभ्यर्चितैर्गंधतोयै-
र्वीथीमार्गाः पुरपरिजने नात्र संमृष्टशुद्धाः ।
पुष्पैश्च्योतन्मधुलवजडैर्निष्पतच्चंचरीकै-
र्व्याकीर्यंते सुरभिभिरितो वेश्मनां चाजिराणि ॥ ३॥

अपि च—

उत्तंभितध्वजपटांचलचुंब्यमान-
ज्योतिर्विमानविततीनि विभांत्यमूनि ।

सौधान्युदस्तमणितोरणकोणनद्ध-
डोलायमाननववंदनमालिकानि ॥ ४ ॥

यावदिदानीं स्वयंवरयात्राकृते समापततो राजन्यस्यावेक्षणेन चक्षुषी संभावयामः । ( परिक्रम्याग्रतो विलोक्य ) । कथमसौ विलासबाह्यालिर्मकरध्वजस्य संगीतशालारतेर्विक्रिया पण्यस्त्रीरत्नानामुत्पत्तिभवनं शृंगारस्य नाभिगृहं लीलाया निर्माणभूमिर्विभ्रमाणामाकर्षणवाडिशं तरुणजनमनोमीनानामवस्कंदपरबलमिंद्रियग्रामस्य विनयमुखपटाक्षेपणरंगो विनीतजनवारणानां स्वगुणविकत्थनस्थानं षीद्गानां वैदग्ध्यविनिमयहट्टछेकानां करालगोलव्यातिकरपितृवनं वेश्याजनमातृजरतपितृपिशाचिकानां पुराणा वामलूरुर्गणिकादारिकाभुजंगीनामपूर्वमद्वैतदर्शनं मायाप्रपंचस्य पारिपंथिको निश्रेयसपथपान्थानां मनोरथमात्रास्वाद्यो दुर्गतानां द्रविणवतां सदाप्यदत्तकवाटो वेशवाटः ।

किंच ।

अविस्रंभस्निग्धं वचनमवलेह्यं श्रवणयोः
परिष्वंगस्संगव्यसनमपहस्त्येव मधुरः ।
कृतेऽन्तः सद्भावात्सपरमुपचारश्च रुचिर-
स्सहैवोद्भिन्नानि स्तनमुकुलकैर्यत्र सुदृशाम् ॥ ५ ॥

( स्पर्शं रूपयित्वा ) अहो वेशवीथीविहाररसिकस्य कोप्यातिशायी सौरभसंभारः समीरणस्य ।

अत्र हि—

प्रौढांगनारुचिरकंठघनांगरागः
कस्तूरिकापरिमलस्पृहणीयगंधः ।
सौभाग्यगर्वभरमन्थरयेव गत्या
चेतः प्रलोभयति नस्तरणो नभस्वान् ॥ ६ ॥

यावदेनं वेशवाटमतिलंघ्य राजन्यकावलोकाय राजमार्गं समासादयामः। अथवा दुष्करमेनमतिलंघयितुम् ।

कुतः ।

**न दृष्टां विम्बोष्ठीमलमनभिभाष्यास्मि चलितुं**
**विलम्बः स्यात्तैस्तैस्सुचिरमुपचारैश्च सुदृशाम् ।**
**अपेक्ष्यंते चास्मान् प्रचुरमपराद्धाश्च सुहृदः**
**प्रियाः प्रत्याश्वास्याः प्रणयघटनायै विघटिताः ॥ ७॥**

तदंतरायः खल्वयं मार्गः कार्यान्तरस्य । अथवा शांतं श्रेयानेव मे प्रस्तुतकार्यांतरप्रसंगस्यात्र व्यासंगः ।

येन—

**तांबूलवीटीरुपयुक्तशिष्टाः कर्पूरपारीस्सकरंडदत्ताः ।**
**माल्यानि धम्मिल्लकृताधिवासान्यमुत्र लप्स्ये सुहुरंगनाभ्यः॥ ८॥**

तदिदानीमेनमवगाहिष्ये । ( परिक्रम्यावलोक्य च ) कथमसौ वेशवाटमुखमंडपे दुर्विनीता शौण्डघर्घरकंठघोषाधरितरूप्यघंटाटेण्टा । कथं नु खल्वस्या मूर्तायाश्शिरोर्तेरात्मानं रक्षेयं । दुर्लभः खल्वेभिर्दुर्दान्तदोवितृभिर्दृष्टस्य ममात्रापसारः । तत् किमत्र शरण । भवतूत्तरीयेणावकुंठितस्त्वरितमस्माद्देशात्पलायिष्ये।( तथा परिक्रम्यन् ) दिष्ट्या निश्शल्यः कुशल्यस्मि हन्त भोः ।

**द्रविणस्यार्जनं द्यूते वेशे तस्य विसर्जनं ।**
**एषामायव्ययद्वारे द्वे आपि व्यसने इमे ॥ ९ ॥**

( कर्णं दत्वा ) कुतः खल्वाह्वानध्वानिः ।( विभाव्य ) कथं चंद्रसेनाभवनात् । इह खल्वश्रांतप्रणयकेलीव्यतिकरमेकं मिथुनं प्रतिवसति । चंद्रसेनावैशिकचकोरश्च । व्याभिचारितं खल्वस्यामाभिजातसौहार्दायां परवित्ताच्छेदनेन

गणिकाकुलधर्मेण । यदनयोर्द्वंद्वपदयोरिव वर्तते परस्परार्थसंक्रमः । अतश्चैतदेवं ।

यतः–

न बहुप्रेयसीन् पुंसः कामिन्यो बहु मन्वते ।
पुंमांसो बहु मन्यंते बहुपुंसीर्न योषितः ॥ १० ॥

( पुनः कर्णं दत्वा ) कथमिहैव भवनचंद्रशालायामपावृत्य गवाक्षं पत्या सह वीक्षमाणा चंद्रसेनेव व्याहरति ।

इयं खलु–

अश्रांतकांतसुरतक्रमनूतनोत्थ–
स्वेदोदबिंदुविसरार्द्रकपोलपालिः ।
मा माह्वयत्यलसविह्वलजिह्मदृष्टि–
र्निश्वासगद्गदगलत्प्रसरैर्वचोभिः ॥ ११ ॥

तल्पस्थितेयमुपधानविशिष्टहस्ता
न्यस्तानना पुलकिनी प्रियभर्तुरंसे ।
आस्रस्तकेशरचनांतरितावतंसा
धत्तेवधानमिह मत्प्रतिपालनायाम् ॥ १२ ॥

भवतु संभाव्यैव गच्छामि । ( उपसृत्य ) अजय्यमस्तु युवयोस्संगतं । किं ब्रूथ । अपि कुशलं भावस्येति । कथममुना कुशलपरिप्रश्नेनोद्घाटितो मे चिरादनवलोकनातिक्रमः । सखायौ मास्म मामुपालभेथां अपराध्यत्र सुलोचनास्वयंवरयात्रा । यद्विप्रकृष्टसंनिविष्टराजांतरशिबिरनिरीक्षणकौतुकेन परिभ्रमतां तृतीयोयं दिवसः । किमाहतुः । तेन हि क्षांतमिति । एष इदानी निष्कृतनिजातिक्रमदुष्कर्मा महाकविप्रबंधस्येव नित्यप्रवृत्तसुखशय्यस्यास्य मिथुनस्य सौखशायिको भवामि । किमाह भवती चंक्रमण–

न्नपलस्येव बालकस्यांतर्गृहं निरुध्यमानस्य कुतस्ते प्रियसुहृदः सौख्यमिति । अलं कथांतरव्याजेनात्मनः सौभाग्यकतया । किमाह भवती । कंपितास्मि अलंक्रियतामयं शय्यार्ध इति । वासु सुलोचनास्वयंवरयात्रां प्रत्यवेक्ष्योपावर्तिष्ये । तदलमतियंत्रणया । किमाह भवान् । दृश्यतां भवता स्वयंवरयात्रा । अहं तु पुनस्त्वन्मुखाच्छ्रोष्यामीति । ( सस्मितं ) अहो चापलमत्र भवतः । यद्वा किं वदंती श्रवणदानमपि गृहस्थूणस्यैवादृष्टबाहिर्गृहस्य सख्युर्नाल्पीयः । ( सस्मितं ) । अथवा प्रवर्तयतु तवापि स्वयंवरयात्रां चंद्रसेना । कथ हासोत्तरमसौ पत्युरुरसि पतिता । भवतु साधयामस्तावत् । ( परिक्रम्यावलोक्य च ) कथमसौ जरत्कूपिका वाराणस्याः प्रदीपच्छाया । मदनभानोरकालपलितं तरुणानां सिनीवाली सुरतचन्द्रातपस्य जंगमचंचावेशवाटस्य संमार्जनी स्त्रैणस्य विडंबयंती विलासिनी विभ्रमान्निजोदवसितालिंदवितर्दिकां दूषयंती भोगवत्या माता निषादवती ।

या खलु—

यतस्ततस्स्यूतविशीर्णसूत्रा पुराणकंथेव शिरालदेहा ।
अमुंचती मंडनमंगनार्हं चलत्यचारु प्रचलाकिकेव ॥ १३ ॥

अपि चास्याः—

मूले बालयवप्ररोहधवलान् लब्धस्वभावांस्ततो
मांजिष्ठप्रसरच्छवीनथ चरत्कंकेलिनालारुणान् ।
पश्चान्मुग्धशिरीषकेसररुचः प्रांते च काकच्छद-
च्छायान्मूर्ध्नि कचान् करोत्यपसरन्नीलीरसो भावितः ॥ १४ ॥

हत भोः, अनया खल्वयथार्थनामा भोगवती जाता येन सा भूताविष्टेव सभय परिहीयते । ग्रहग्रहीतेव न विश्वस्यते विषदूषितेव वापिका नास्वाद्यते । विषधराधिष्ठिताचंदनलता नोपसेव्यते । किंच बहुना चंडालिका तु

सा संप्रति चंडालिकेव दूरे स्पर्शस्यानिसर्गाश्लीलमुखराया हृदय इवात्मनो बहिर्द्वारे भवने को वावसरमेकं लगति ।

तथाहि—

निष्कासयत्येकत एकमेषा प्रवेशयत्यन्यमथान्यतश्च ।
पातिं सुतायाः कपटोत्कटाभिः स्वांशावतारैरिव कुट्टिनीभिः॥१५॥

इत्थं च पुनः समर्थये ।

निर्दोषा भणितिर्निसर्गमधुरा निर्मत्सरा शेमुषी
निष्पापा नृपता जगद्बहुमता गीतिश्च निर्वक्रता ।
निर्दोषा चरितस्थितिर्गुणवती वेश्या च निर्मातृका
यत्सत्यं बहुनापि भाग्यवसुना लभ्येत वा नैव वा ॥ १६ ॥

सर्वमेतदास्तां । इदं तु पुनरत्र धुनोति । यदद्याप्यसौ तरुणीमन्या झर्झरखर्जूरकमवरुद्धवती न जातूज्झति स्वयं वृषस्या । कथमाह्वयत्यापि । हत ध्वस्तोस्मि । भवतु ( उपसृत्य ) किमपि व्याजं कृत्वा गमिष्यामि । ( हास्यं निरुंधन् ) अथवा व्याजीकरणमपि नास्यां अर्थक्रिया प्रवर्तयति । ( उपसृत्य ) वासु निषादवति सुभगा भव । अथ वयस्यखर्जूरकोप्यत्र । किं ब्रवीषि । न जानीम एव त्वामिति । हंत साधुकृतं खर्जूरकेण किं भवन्त्या अपि जर्झरवादनमेव तस्मै स्वदते एषाहमर्धचंद्रकं कृत्वा तमानेष्यामि । मा कदाचिदपि भूर्निषादवती विषादवतां । किमाह भवती। कुतो मे विषादः । यदा भाव एवेवं वर्तते इति । वासु तदयमद्यापृच्छे । कि ब्रवीषि कदा पुनर्भावो द्रष्टव्यः । न खल्विहागत्य युक्तं मित्रदुहितरमसंभाव्य गंतुमिति । वासु स खर्जूरकमद्यैव मां द्रक्ष्यासि किमाह भवती । तेन हि गम्यतामिति । साधयामस्तावत् । ( परिक्रम्यावलोक्य च ) इयं खलु जरात्पिशाचिकादर्शनप्रायश्चित्तं लोचनाभ्यामियं हि वैजयंती मकरकेतोरवलेपस्तारुण्यस्य पुण्यं लावण्यस्य भाग्यं सौभाग्यस्य माणिक्यं गाणिक्यस्य चंद्रिका

जगन्नयनचकोरकाणां चंद्रमत्या दुहिता रतिचंद्रिकानाम मत्तकाशिनी प्रकाशितकाशीराजपुरी यशोवैभवा स्वभवनप्रांतवर्तिनः शिक्षागृहात्संगीतयोग्या जनितश्रमरमणीया निर्गच्छति ।

यासौ—

आबद्धचडातकपीड्यमान–मध्यस्फुटालक्ष्यगभीरनाभिः ।
प्रस्वेदसुस्निग्धशरीरयष्टिर्विभाति विभ्रांतविशालदृष्टिः ॥ १७ ॥

किंच ।

मुहुर्नृत्ताभ्यासव्यतिकरचलन्मौक्तिकलता
समुन्मृष्टाच्छाच्छस्तनमलयजालेपरुचिरा ।
चिरायासश्राम्यच्चरणशिथिलन्यासमधुरा
क्षणन्मंजीरेयं मदयति मनो रंजयति च ॥ १८ ॥

यावदस्याः सौवस्तिको भवामि । ( उपसृत्य ) स्वस्ति भवत्यै । सुंदरि कृत नृत्ताय ताभ्यामंजलिबंधेन ।

( सस्मितं )

उन्मार्जितेपि बहुले हरिचंदनेस्मिन्
अव्यक्तमेव निबिडस्तनि दृश्यमानः ।
लाक्षारसेन रचितः कुचकुंभपीठे
धन्यस्य कस्य वदनेन विशेषकोऽयम् ॥ १९ ॥

कथमदृष्टोत्तरा सत्वरपरावर्तननर्तितस्तनकलशा साविलासविनिहितकरतलस्थगितस्तनतटोत्संगा सलीलचलनवाचालितमेखलाकलापा सवैकक्ष्यसाचीकृतचिकुरलोचना सविभ्रमांकुरितलज्जास्मितविकसितकपोलतलातूर्णपदमुखरनूपुरमसौ स्वभवनद्वार एवातरिता । चिरादवात्यमुन्मेषेण फलमीक्षणाभ्यां । भवतु साधयामस्तावत् ( परिक्रम्य ) कथमसावशोकतिलकायास्सुता केली-

मतीबाल्यसुलभसुकुमारचापला सत्वरमागत्य मां हस्ते गृह्णाति ( निर्वर्ण्य) अहो लालनीयता बालस्य ।

तथाहि-

गतिर्लोलालोलातरलतरलं चारु च वचः
स्फुरद्दंतज्योत्स्नां प्रसररमणीयं विहसितं ।
स्तनौ नोद्भिद्येते न च विचरतः साचि नयने
किमप्यस्या बाल्यं हरति तरुणिम्नोपि हृदयम् ॥ २० ॥

भद्रे किं ब्रवीषि । आह्वति भावमर्जुकेति । ( ऊर्ध्वं विलोक्य ) कथमशोकलतिकापि द्वितीयस्यां प्रासादभूमौ गोपानसीमध्यासीना विडंबयंती विमानारूढां दिव्ययोषितामित एव दत्तदृष्टिर्मां प्रतीक्षते। भवतु प्रवेक्ष्यामि । ( प्रविश्य ) इयं सोपानपंक्तिः । यावदारोहामः । ( नाट्येनारुह्य ) वासु कल्याणिनी भव । किं ब्रवीषि । संनिहितामसूं पर्यंकिकामलंकरोतु भाव इति । यथाह भवती । ( उपाविश्य ) वासु किमिदं गवाक्षजालांतरिता विदूरे वर्तसे । कथं सविभ्रमोन्नमितभ्रूलतमसौ स्मयमानविलोचना न किमपि ब्रवीति । भवतु कथितमनया पुष्पवत्त्वम् । वासु कः खलु वराकः पुष्पवतीमशोकलतिकामसंभावयति । कृतं व्रीडितेन । किं ब्रवीषि । इह गच्छतो हास्तिनपुरवास्तव्यस्य नंद्यावर्तनाम्नः कौरवेश्वरप्रियानुचरस्य त्रीणि दिनानीति । तेन हि लब्धमेव देशांतरपरिभ्रमणफलं नंद्यावर्तेन ।

अथ कीदृशो गुणैर्नंद्यावर्तः । किं ब्रवीषि । न क्वापि हीयते वाराणसी विटपमहत्तरादार्यभद्रिलकादिति । कथं मयैवोपमीयते । भवत्विदमुपालभ्यते ।

कथं स कामी पुरुषार्थवित्स्याद्विहाय यस्संप्रति वर्तते त्वाम् ।
अमोघमस्त्रं ननु पुष्पभृद्धि त्वं पुष्पिता पुष्पशरासनस्य ॥ २१ ॥

किं ब्रवीषि । कुतः पुनर्भावेनाप्रविश्य भवन गंतुमुपक्रांतमिति । वासु समापतंति स्वयंवरयात्रायै राजानस्तदवेक्षणचापलमत्र मां चलयति । किं

ब्रवीषि। तेन हि स्वैरमिहैवास्यतां। एष हि स्पृष्टमेव निरीक्ष्यते पार्श्वतो राजमार्गः। कियती च वेला पुनरित एव प्रतिष्ठमानानां राज्ञामिति। (विलोक्य) कथ प्रवृत्तमेव गंतुमितो नृपतिभिः। किं ब्रवीषि। अथ कोय पार्श्वचरेण चामरग्राहिणानुगम्यमानो वल्गु वल्गंतं महाप्रमाणमाजानेयमारुह्य राजमार्गमवगाहत इति। (विभाव्य) अयं खल्वनिल्वाटेश्वरः कुब्जरात्रस्य पाता। ·

तथाहि—

स्थगित जठरभागाः श्मश्रुभिर्लम्बमानै-
र्निशितधवलधारान् बिभ्रतो मंडलाग्रान्।
अनतितरलयातास्तं पतिं सूचयंति
प्रकृतिसरलगात्रास्सैनिकाः कौब्जरात्राः॥ २२॥

किं ब्रवीषि। कः पुनरयमतिरयतूर्णपद्गामिनं वानायुकप्रवेकमारुह्य प्रयाति।

(विभाव्य) कथमसावधिष्ठानस्याधिष्ठाता काश्मीरेश्वरः।

तथाहि—

तूणीरिणः स्थूलकठोरवेणुर्निर्माणबाणासनपाणयोऽमी।
गौरत्विषः कर्कश बभ्रुकेशाः काश्मीरनाथं कथयंति सैन्याः॥ २३॥

कि ब्रवीषि।

कः पुनरसौ विंध्यशिखरोदग्रकायमाबद्धनक्षत्रमालोज्ज्वलनैपथ्यं स्थूलपृष्ठं विंध्यसिंधुरपृष्ठमधिरुह्यायाति। (विभाव्य) कममसौ आन्ध्रदेशाधिपतिः विजयवाटीपातिः।

तथा ह्यमी।

प्रांशुप्रतीकाः प्रकृतिप्रगल्भाः प्रायेणकालागरुकालवर्णाः।
कुंतान् वहंतो गुरुदीर्घदंडानंध्राधिराजस्य चरंति सैन्याः॥ २४॥

किं ब्रवीषि ।

कः पुनरसौ महाप्रमाणवान्हिकनिर्वहिर्वर्माणमनाकुलचरणविन्यासां विभाव्यमानगमनजवां वेसरवधूमारुह्यातिवर्तते इति । अयं खलु कर्नाटकभूमेः पालयिता मान्यखेटाधिपतिः ।

तथाहि । अमुं परितः—

उत्कीर्णशंखमणिदामपरीतकंठाः
प्रालंबकर्णविनिवेशितदंतपत्राः ।
कर्नाटका विकटविस्मयनीयवेषाः
शक्त्युद्यताः प्रथितशक्तय आपतंति ॥ २५ ॥

किं ब्रवीषि ।

कः पुनरसौ सत्वरगतिचटुलगामिनं कर्कशवपुषं विक्रमारूढः पादचारिभिरेव छत्रधारिभिरासेव्यमानः सत्वरमभ्येतीति । ( विभाव्य ) कथमसौ चोलेश्वरः खरपुराधिपतिः ।

तथाहि—

कौक्षेयकान् कुंचितकुब्जपुष्मान् धनूंपि वार्क्षाणि च बिभ्रतोमी ।
वेपैरनत्युज्ज्वदर्शनीयैश्चोलेश्वरं चोलभटा ब्रुवंति ॥ २६ ॥

किं ब्रवीषि । कः पुनरसौ नातितूर्णगमनांदोलिताभोगाकिंकिणीझणझणारवमुखरं कलिकलभमारूढ इति । ( विभाव्य ) कथमसौ दक्षिणमथुराधिपतिः पाण्ड्यः ।

तथाहि—

शिखंडिबर्हाग्रपिनद्धचूडाःप्रौढानि तालानि शरासनानि ।
वहंति मुक्तांचितहेमपत्र–कर्णा अमी पांड्यनरेन्द्रसैन्याः ॥ २७ ॥

किं ब्रवीषि । कः पुनरयमांदोलिकाधिरूढो निभृतमंदगामिपरिजनो राजन्यमिति । ( विभाव्य ) कथं केरलपालो महोदयपुराधिपतिः ।

अमी हि—

**आगुल्फदीर्घक्षुरिकापिनद्ध–कटीतटास्सव्यकरात्तचापाः ।**
**करैः परैस्तीक्ष्णमुखान् वहंति शिलीमुखान् केरलनाथसैन्याः२८**

किं ब्रवीषि ।

कथमसावचपलखेलस्थूलोच्चयगामिनी करेणुकामारूढः कौरवेश्वरो दृश्यते इति । ( विलोक्य ) वासु केनाभिज्ञानेन कौरवेश्वरमज्ञासीः । ( विभाव्य ) नूनमसावमुष्याग्रतः संमुखमासीनः स एव भवत्याः पतिर्नंद्यावर्तः । यतः सोपि नात्र लग्नां दृष्टिं प्रत्याक्षिपति । कथममुना स्मितेनैव ह्यनुज्ञातव्यमर्हत्येव सत्यमत्रभवती नंद्यावर्त । तिष्ठत्वेतत् । कथय कतमः खल्वत्र काशीराजस्य जामाता भविष्यति । किं ब्रवीषि । श्रुतं मया नंद्यावर्तमुखात् द्विःकिल वृत्तम् । सुलोचनामेघेश्वरयो परस्परदर्शनमनुरागश्च गरीयान् तथा तथा प्रकटित इति । इति युज्यत एतत् । कुमुदाकरमेव हि कौमुदी संभावयति । व्यज्यते चास्योत्कंठतानेन लिंगेन ।

अस्य हि—

**तंद्रालसानि सुहृदा सह भाषितानि**
**निद्रात्ययादिव जडानि निरीक्षितानि ।**
**चिंताभरोपहितपांडिमगंडशोभं**
**प्रम्लानकोकनदमंथरकांतिवक्त्रम् ॥ २९ ॥**

वासु गतस्सर्वो राजलोकः । यावदहं गत्वा स्वयंवरवृत्तान्तं जानामि । किमाह भवती । तेन हि गम्यतामिति ( उत्थाय ) वाराणसीसारयौवने मेघेश्वरमेव वरं स्वयं वृणीतां सुलोचनासुभगं त्वामेव नित्यसुमुखा नंद्यावर्तोपि नंदयतु ।

( इति निष्क्रांतो विटः । )

## शुद्धविष्कंभः ।



( ततः प्रविशत्यासनस्थो राजा नंद्यावर्तो विदूषकश्च )

**राजा**—( सोत्कंठमात्मगतं ) अहो सौकुमार्यमपि योषितां कार्कश्यमेव पुष्णाति पुष्पायुधस्य ।

तथाहि-

**उद्भिन्नकौतुकरसव्यातिभिन्नलज्जा**
**पारिप्लवानिकृतसाध्वससंप्लवानि ।**
**विप्रेक्षितानि मधुराणि सुलोचनाया-**
**स्संतापयंति हृदयं मृदु शीतलानि ॥ ३० ॥**

मुष्णाति च विषमेषुदूषिता शेमुषी सत्त्वोन्मेषं पुरुषस्य ।

तथाहि-

**सममिदमधुना सुलोचनायाः**
**प्रकृतिचलेन विलोचनद्वयेन ।**
**अनिभृतमभवद्विलुप्तसत्त्वं**
**हृदयमधीरमधीरलोचनायाः ॥ ३१ ॥**

( विभाव्य ) अहो संस्कारसंतानस्य द्रढीयसी प्रौढी येन प्रत्यक्षपरोक्षयोस्तन्वीक्षणं प्रति चक्षुषी न विशेषमीषदपि दर्शयतः । (आत्मानं प्रति)

किं च भोः ।

**नेत्रद्वयं विमिषदुन्मिषदप्यदो मे**
**संस्कारबद्धघटनामवलोकते ताम् ।**
**तद्ब्रूहि मे हृदय यत्स्वदतेत्र तुभ्य-**
**मुन्मीलयामि यदि वा विनिमीलयामि ॥ ३२ ॥**

विदूषकः—भो वअस्स किं अज्ज सो एव्व गंगातीरउत्तंतो हिअए परिवत्तादि । जदो चिंताभरणिप्पंदसव्वंगो णिव्वादत्थिमिदो विअ साअरो णिच्छलं लच्छिासि ।

नंद्यावर्तः—आर्य सौधातके साधु लक्षितम् ।

तथाहि—

कृत्वा दक्षिणपादजानुशिखरे सव्येतरं कर्बुरं
हस्तेनासनहेमपीठमधुनावष्टभ्य वामेन च ।
अर्धस्रस्तपुटं विलोचनयुगं न्यस्यन् पुरो निश्चल
वारंवारमसौ विनिश्वसति च स्थूलायतं निस्सह ॥ ३३ ॥

राजा—( सवैलक्ष्यं ) सखे नंद्यावर्त वयस्य सौधातके किं ब्रूथ ।

नंद्यावर्तः—देव न किमपि, इदं तु विज्ञाप्यते ।

स्वयमवरिष्ट परितो या त्वां नेत्रोत्पलस्रजैव पुरा ।
तस्याः स्वयंवरोऽयं पुनरुक्तो लोकव्यक्त्यर्थम् ॥ ३४ ॥

राजा—अथ कियद्व्यवधानमस्य स्वयन्नरयात्रासमयस्य ।

विदूषकः—णं अत्तहोदीए कासीराअउत्तीए आअमणं ।

नंद्यावर्तः—( पुरो निर्दिश्य ) नन्वियं प्रविष्टैवात्रभवती काशीराजपुत्री ।

राजा—( सोच्छ्वासमात्मगतं ) कथ प्रविष्टैव । ( निर्वर्ण्य )

इयं हि सा काशिपतेस्तनूजा स्वयंवरस्थानसभामुपैति ।
सुलोचना दीर्घविलोचनाभिः पुरांगनाभिस्सह निम्ननाभिः॥३५॥

( ततः प्रविशति यथानिर्दिष्टा सुलोचना नवमालिका प्रतीहारश्च )

प्रतीहारः—इत इतो भर्तृदारिका ( सर्वे यथोचितं परिक्रामंति ) ।

---

१. भो वयस्य किमद्य स एव गगातीरवृत्तांतो हृदये परिवर्तते यतश्चिंताभरनिष्पदसर्वांगो निर्वातास्तिमित इव सागरो निश्चल लक्ष्यसे । २ ननु अत्रभवत्याः काशीराजपुत्र्या आगमनं ।

अहो महाराजस्य सर्वातिशायिनी प्रज्ञा यदुपज्ञामियं प्रज्ञावतामगर्हणीया वधूवरसमाराधनलब्धस्तोत्रा स्वयंवरयात्रा ।

**पिता वा माता वा भवतु स वरस्ताद्दगथवा**
**कुमारी तच्छंदं निभृतमवगच्छेदिति तु यत् ।**
**तदप्येषा दत्तिर्लंघयति यदस्या रमयितु-**
**र्गुणं वा दोषं वा स्वरुचिमनुचक्षुर्विमृशति ॥ ३६ ॥**

**सुलोचना**—( अपवार्य ) सहि[1] सच्चं एव्व तं जं तुए गंगातीरे विलंबंतस्स बह्मणस्स मुहादो किंपि सुदंति ।

**नवमालिका**—किं[2] अण्णहा हि तुह मए भाणिदं आसि ।

**सुलोचना**—सहि[3] विसरिदं खु तं पुणोवि एक्कवारं भणाहि ।

**नवमालिका**—( सस्मितं ) विसरिदं[4] वा होदु पुणोवि एसा भणामि ।

**एसो[5] जयोत्ति विदिओ कुरुराअउत्तो**
**विस्संभणिज्जरसिओ विणयक्कधामो ।**
**कामो सअंकवअणाण जणस्स कंतो**
**संतोसपूदहिअओ समरेक्कमल्लो ॥ ३७ ॥**

**सुलोचना**—सहि[6] तवि खु तेण एव्व भाणिदं इमं चेअ कज्जं उद्दिसिअ सो जणो एत्थ आअदोत्ति ।

---

१ सखि सत्यमेव तत् यत्त्वया गगातीरे विलंबतो ब्राह्मणस्य मुखात् किमपि श्रुतामिति । २ किमन्यथा हि तव मया भणितमासीत् । ३ सखि विस्मृत खलु तत् पुनरप्येकवारं भण । ४ विस्मृतं वा भवतु पुनरप्येषा भणामि । ५ एषो जय इति विदितः कुरुराजपुत्रो विस्रंभणीयरसिको विनयैकधामा । कामो शशाङ्कवदनाना जनस्य कांतः संतोषपूतहृदयस्समैरकमल ॥ ६ सखि तदपि खलु तेनैव भणितमिदमेव कार्यमुद्दिश्य स जनोऽत्रायात इति ।

नवमालिका—जेणे मं पत्तिआअसि । इदएव्व दक्खसि ।[1]

प्रतीहार'—प्रविष्टाः स्मः स्वयंवरसभां ( परितोऽवलोक्य )

एकत्र विद्याधरराजमुख्यै-
रन्यत्र भूपालकुलप्रकाण्डैः ।
इयं सभा संप्रति सेव्यमाना
व्यनक्ति कामप्यपरामभिख्यां ॥ ३८ ॥

अपि च मन्ये ।

दर्शयंति निजामृद्धिं प्रतिराजमिहार्पिताम् ।
स्वयं भगवती लक्ष्मीः श्लाघते जगति ध्रुवं ॥ ३९ ॥

( निर्वर्ण्य ) अये परिमितोदारपरिवारता महीपतिनामाविर्भावयाति वैभव विभवस्य ।

पुनः ।

वारस्त्रीहस्तधूतो हसति सितरुजां चामराणां समूहो
हंसान् प्रावृट्प्रवासप्रमुदितमनसः स्वैरमुड्डीयमानान् ।
लीलामालेढिमेघध्वनिजनितमदं नृत्यतां वर्हिणां च
चंचन्मायूरपिच्छव्यजनपरिकरः पार्श्वतो धूयमानः ॥ ४० ॥

कथमिदानीमकंपमानसुतासंनिधानमभियमानाविभ्रमभंगी विडंबयाति कामिलोक कुसुमधन्वा । भवतु प्रक्रांतमेवोपक्रमामहे । ( विलोक्य ) कथमसौ सार्द्रगधं यावदेन प्रथमतो दर्शयामि ।

( उपसृत्य )

फणिनामधिपेन यो वितीर्ण
विजयार्धस्य भुनक्ति दक्षिणार्धं ।

१. येन मां प्रत्यायासि । अत्रैव द्रक्ष्यसि ।

रथनूपुरचक्रवालनामा
प्रथिता यस्य चकास्ति राजधानी ॥ ४१ ॥
प्रणम्रविद्याधरमौलिमालिका
मणिप्रभाले प्रमिलन्नखार्चिषः ।
प्रियात्मजस्तस्य जगद्दृशां प्रियो
नमेरसौ मेरुसमानगौरवः ॥ ४२ ॥

नवमालिका-कहं एस चक्कवट्टिणो महाराअभरहस्स अग्गमहिसीए सुभद्दाए जेट्ठभादअस्स सअलविज्जाहरचूडामणीए महाराअणमिए सविसेस-परक्कमतुलिदणिअजणओ तणओ ।

प्रतीहारः—( सुलोचना प्रति )

किमस्ति ते चेतसि शश्वदुच्छ्वस-
न्नमेरुसौरभ्यसुगंधिसीमसु ।
विहर्तुमिच्छा गुणिना गुणप्रिये
सहामुना मेरुवनांतभूमिषु ॥ ४३ ॥

( विभाव्य आत्मगतम् ) कथं परांचति वास्याश्चेतः । भवत्वपर्यनुयोज्याश्चित्तवृत्तयः भवत्वन्यतो दर्शयामि । ( परिक्रम्य दृष्ट्वा च ) कथमसावुत्तरार्धो विद्याधरकुमारः सुनमिः ।

योसौ—

विमोचयंत्यामपि वारवध्वां
स्वयं च पर्यस्तविलोचनान्तः ।
विमोचयत्यंगदकोटिदष्टं
स विभ्रमं चामरबालकाग्रं ॥ ४४ ॥

१ कथमेष चक्रवर्तिनो महाराजभरतस्याग्रमहिष्याः सुभद्राया ज्येष्ठभ्रातुः सकलविद्याधरचूडामणेर्महाराजनमेः सविशेषपराक्रमतुलितनिजजनकस्तनयः ।

( उपसृत्य )

विनमितरिपुयक्षः पक्षपाती गुणानां
विनमिरिति विनेता दुर्विनीताशयानाम् ।
भुजगपतिवितीर्णामुत्तरां राजताद्रे-
रवति सुकृतावान्यः श्रेणिमेणांकसौम्यः ॥ ४५ ॥

अलकामधितिष्ठतः पुरीं
त्रिजगत्ख्यातविभूतिवैभवाम् ।
अयमप्रतिमेयविक्रम-
स्तनयस्तस्य नयैककोविदः ॥ ४६ ॥

नवमालिका—कहं एस अ मार वाहुवलिणो माउलउत्तस्स महारा--अविणमिए णिम्मलचरित्तओ पुत्तओ ।

प्रतीहारः—

मंदमंदविहरत्ववनानि
स्वैरमुत्तरकुरूपवनानि ।
सेवितु किममुनास्ति मनस्ते
पारिजातसुमनःसुरभीणि ॥ ४७ ॥

( विभाव्य आत्मगतम् ) कथमुदास्त इव । भवत्वन्यतो दर्शयामि ( परिक्रम्यावलोक्य च ) कथं विद्याधरकुमारो लोहार्गलाधिपतिर्मेघप्रभः ।

योसौ—

समुत्पतत्केसरधूलिलुब्धा-
मलुब्धपातामुपरि भ्रमंतीं ।
अन्वेति दृष्ट्या भ्रमरीं सलीलं
लीलासरोजं भ्रमयन् कराभ्यां ॥ ४८ ॥

---

१. कथमेष च मार. वाहुवलेर्मातुलपुत्रस्य महाराजविनमेर्निर्मलचरित' पुत्र. ।

( उपसृत्य )

यस्याग्रतः संयति संपतंतः
क्षणेन निर्वासितशौर्यसाराः ।
मेघप्रभावा रिपवो भवंति
मेघप्रभो नाम स एष धीरः ॥ ४९ ॥

**नवमालिका**—कहं एस विज्जाहरलोअसलाहणिज्जसोहग्गसंभाविदो असंभाविददोसलेसो लोहग्गलेस्सो ।

प्रतीहारः—

अनेन सार्धं सुरलोकवात-
व्याधूतसंतानकसौरभाणि ।
कल्याणि सेवस्व सुरस्रवंती-
तीरांतमंदारलतागृहाणि ॥ ५० ॥

( विभाव्य आत्मगत ) कथमिहापि सैव रीतिः । भवतु भूपालानिदानीं दर्शयामः । ( परिक्रम्य विलोक्य च ) कथमसौ साधुविधानकप्रवर्तितनयश्चक्रवर्तितनयः शरत्कौमुदीविशदोदर्ककीर्तिरर्ककीर्तिः ।

योसौ—

दीव्यच्छलाकापरिवर्तनेन
सविभ्रमोदंचितपूर्वकायः ।
स्रस्तं प्रकोष्ठात्कटकं करेण
सुश्लिष्टमारोपयतीतरेण ॥ ५१ ॥

( उपसृत्य )

यस्मै कृतांजलिरदाद्विजयार्ध एव
सेनानिनाथचलितः स्वयमभ्युपेत्य ।

१ कथं एष विद्याधरलोकश्लाघनीयसौभाग्यसंभावितोऽसंभावितदोषलेशो लोहार्गलेशः ।

एकातपत्रमवते भरतं समस्तं
सिंहासनं च चमरद्वयमातपत्रम् ॥ ५२ ॥

अपि च—

येनैक एव विशिखश्चतसृष्वपि दिक्षु दिग्जये मुक्तः ।
एकत्र तुषाराद्राावितरत्र पपात पाथसां पत्यौ ॥ ५३ ॥

चक्रेण निष्प्रतिघनिर्जितवैरिराज-
चक्रेण सार्धमतिमानुषविक्रमेण ।
वर्णाश्रमस्थितिगुरोर्भरतेश्वरस्य
तस्यैष सूनुरुदपादि पुरः प्रवीरः ॥ ५४ ॥

किंच—

हिमाचलांभोनिलयावधेर्भुव-
स्स चक्रवर्ती युवराज एष तु ।
समस्तदेवांचितपादपंकजः
पितामहश्चास्य पुनः पितामहः ॥ ५५ ॥

**नवमालिका**—कहं एस आउज्झाउरिवल्लहस्स चक्कवट्टिणो महाराअभरहस्स पढमतणओ अप्पडिहदसत्ती जुवराअ अक्ककित्ती ।

**प्रतीहारः**—

समुच्छ्लसन्मेदुरसारसालसं
झरीस्सरय्वाः मृदुसारसाग्मैः ।
विगाह्य नीहारजडो निषेवतां
रहोविहारेषु युवां समीरणः ॥ ५६ ॥

---

१. कथमेष अयोध्यापुरीवल्लभस्य महाराजभरतस्य प्रथमतनयोऽप्रतिहतशक्तिर्युवराजोऽर्ककीर्ति ।

कथमत्राप्यनुत्सुकेव। अलक्षणो विषमेषुव्यापारः । भवत्वग्रतो दर्शयामि। (परिक्रम्यावलोक्य च) कथमसौ बलिनो बाहुबलिनः पौदनाधिपतेः कुमारो महाबली।

योसौ—

अंगुष्ठमुद्रार्पितपद्मराग-
ज्योतिःशलाकाभिरनाकुलाक्षः।
आरंजयत्यंगुलिसारणेन
स्मेराणि मुक्तागुणमौक्तिकानि ॥ ५७ ॥

(उपसृत्य)—

क्षोणीमा लवणोदमा हिमवतो रूप्याद्रिणा गंगया
सिंध्वा चापगया पयोध्ववदिभिः षोढा विभक्तामिमां।
यत्स्वीकृत्य निरर्गलं विजयते तत्संयुगे चोदितं
चक्रं चक्रधरस्य वक्रितमभूद्यस्मिन् मनाग् द्वेषिणि ॥५८॥

यश्च।

तृणायेदं मत्वा सकलमपि साम्राज्यविभवं
सबीभत्सं कृत्स्नं विषयसुखमुत्सृज्य विरसम्।
तपस्तप्त्वा कर्मास्रवमपि दहन् निर्जरयितुं
क्षणाद्बद्धं चैनः शिवपदकवाटं व्यघटयत् ॥ ५९ ॥
तस्यैष तनयो यूनां विशिष्टः पौदनेयकः।
अनेन रममाणा च युवतीनां विशिष्यते ॥ ६० ॥

**नवमालिका**—कहं एस बाहुबलिणंदणो उक्खादपडिपक्खमाणसंकुलओ इक्खाउवंसेक्कभूसणं अक्खलिदणिअपरक्कमतुलिदबाहुबली कुमारमहाबली।

१. कथमेष बाहुबलिनन्दन उत्खातप्रतिपक्षमानशंकुः इक्ष्वाकुवंशैकभूषणमस्खलितनिजपराक्रमतुलितबाहुबली कुमारमहाबली।

प्रतीहारः—

सुरतश्रमांबुकणसौरभोद्धुरः
व्यजनानिलः कुमुदगंधबंधुरः ।
मुदमातनोतु भवतोस्समीरणः
प्लुतनातरंगपरिवर्तशीतलः ॥ ६१ ॥

( विभाव्य स्वगतं ) कथमिहाप्यसौ कुंठोत्कंठैव । भवत्वन्यतो दर्शयामि ( परिक्रम्यावलोक्य च ) कथमसौ उज्जयिनीपतेरुग्रान्वयप्राग्रहरस्य मध्यमलोकमनोः महाराजमघोनः प्रियतनयः कुमारजयंतः ।

योसौ—

निर्विश्य किंचित्कटकामुखेन
हस्तेन तेनैव पुनः सहेलम् ।
नीतेन सूचीमुखतां निहंति
स्तंभं पुरोवर्तिनमर्धवीट्याः ॥ ६२ ॥

( उपसृत्य )

आज्ञाक्षराण्येव सुमुखानि पृथ्वी-
मवंति यस्योर्जितशासनस्य ।
अवंतिषु ग्रामललामशोभा-
मलंकरोत्युज्जयिनीं पुरीं यः ॥ ६३ ॥
महीपतेस्तस्य महीयते गुणै-
रसौ कुमारस्तनयस्तनूदरि ।
व्रजात्रगागप्रगुणा गुणोत्करा
गुणज्ञगोष्ठीश्रवणावंतसताम् ॥ ६४ ॥

**नवमालिका**—[1]कहं एस कस्सववसुत्तंसो दंसिदुद्दाममणोहरदेहकंतिपब्भारो पडिपक्खराअचक्कं जअंतो कुमारजअंतो ।

---

1. कथमेष काश्यपवंशोत्तंस दर्शितोद्दाममनोहरदेहकांतिप्राग्भार प्रतिपक्षराजचक्रं जयन् कुमारजयंत ।

**प्रतीहारः**-( उपसृत्य )

**निशीथिन्यां यूना प्रथितयशसा साकममुना**
**शरच्चंद्रोद्योतद्विगुणविशदं सौधशिखरं ।**
**रतिक्रीडाखेदव्यपनयविदग्धोपचरणं**
**मुहुः सुधावातं भज कुमुदसंपर्कसुरभिम् ॥ ६५ ॥**

-- ( विभाव्य स्वगतं ) कथमिहाप्यनीहैव । भवत्वग्रतो दर्शयामि । (परिक्रम्य ) कथमसौ मथुरानाथस्य हरिवंशप्रथमकंदर्पस्य महाराजहरिकांतस्य प्रियसूनुः सुकेतुः ।

योसौ-

**व्यापारितां दृष्टिमिहैव पूर्व—**
**मपांगसंचारिततारकांताम् ।**
**प्रत्याहरत्यव्यपदेशलक्षां**
**द्राग्गोचरो मन्मथमार्गणानाम् ॥ ६६ ॥**

**राजर्षिरस्ति हरिवंशमहीपतीना—**
**माद्यो हरित्सु हरिकांत इति प्रतीतः ।**
**यस्साम्यमेति हरिणा हरिणांकरोचि—**
**र्न्यक्कारि कीर्तिधवलीकृतविश्वलोकः ॥ ६७ ॥**

**तस्य पृथ्वीपतेः सूनुः कामधेनुरुपेयुषां ।**
**प्रख्यातः शौरसेनोसौ सुकेतुश्शूरसैनिकः ॥ ६८ ॥**

**नवमालिका**—केहं एस सोरसेणीसमुब्भवमहग्घविदतरलकोमलकव्वबंधस्स सूरसेणमंडलस्स मंडइत्तअं महुरं अहिवसंतो महुरकंतिणिब्भत्थिदमअरकेदू सुकेदू ।

---

१. कथमेष शौरसेनीसमुद्भवमहार्घिततरलकोमलकाव्यबन्धस्य शूरसेनमडलस्य मंडनायिता मधुरामधिवसन् मधुरकातिनिर्भर्त्सितमकरकेतु सुकेतुः ।

प्रतीहारः—

अमुना यमुनातरंगभंग-
स्खलनक्लेशितशीतमारुतेषु ।
विहरस्व सुखाकरेषु वृंदा-
वनपर्यंतलताग्रहांतरेषु ॥ ६९ ॥

( विभाव्य स्वगतं ) कथमसौ न क्वापि रज्यति । तथाप्यन्यतो दर्शयामि । ( परिक्रम्य दृष्ट्वा च ) कथमसौ हास्तिनापुरकः सोमान्वयककुदो निरायासनिर्वर्तितशत्रुजयः कुमारो जयः ।

योसौ—

नास्ते विभिद्यक्रममद्य नैव
विडंब्यते विभ्रमचेष्टितैर्वा ।
नाप्यत्र रिक्ता स्थ मुदास्त एव
वरं तु सत्त्वं विवृणोत्यपूर्व ॥ ७० ॥

विदूषकः—( अपवार्य )—कहं[1] उवत्थिदा सअंवरजत्तासमत्ति ।

नंद्यावर्तः—वाढं तथैव ।

प्रतीहारः—( उपसृत्य )

अभिषिच्य युगोद्यमे त्रिधाम्ना
कुरुराज्य त्वमिति प्रबोधितो यः ।
कुरुराज इति प्रतीतनामा
कुशलादानमवर्तयत्प्रजानाम् ॥ ७१ ॥

यस्य च—

युगारंभे दानक्रममनभिजानत्यपि जने
तपश्चर्याप्रादुष्करणपरवत्ताहृतधिये ।

१ कथमुपस्थिता स्वयंवरयात्रापरिसमाप्ति ।

गृहानभ्येताय स्वयमदित दानं भगवते
प्रियभ्राता श्रेयान् समुपचितनिश्रेयसरुचिः ॥ ७२ ॥

रूपेण कांत्या सहसा महिम्ना
शौर्येण दानेन पराक्रमेण ।
बिभ्रत्परां कीर्तिमनन्यलभ्यां
तस्यैष पुत्रः शमितारिसत्रः ॥ ७३ ॥

यो हि—

करिकरपरिणाहस्थूलभारांधकार—
स्थगितगगनगर्भं मेघवक्रामरौघम् ।
अधरितघनघोषः सिंहनादस्वरेण
व्यजयत यत एषामुष्य मेघेश्वराख्या ॥ ७४ ॥

**नवमालिका**—ऐसो खु सुणिम्मलकित्तिसंभारभरिदभुवणब्भंतरस्स राएसिणो महाराअसोमपहस्स पढमतणओ लोअलोअणपुण्णचंदो समरमुहपरम्मुहीकिदवेरिणरिंदो णिअगुणामिअसोत्तणिव्वत्तिअसअलजणसोत्तरसाअणो पवित्तचरित्तपरायणो कोरवेसरो मेहेसरो । ता इमस्सिं संचारिअंतु विअसिअउप्पलदलमालकोमलाइ सिणिद्धमुद्धसरलपहमराइ कोदूहलफुल्लाविदाइ तुह लोअणाइ ।

**सुलोचना**-( स्वगतं ) कहं अइअउत्तो । ( समदनाकूतम् )

---

१ एष खलु सुनिर्मलकीर्तिसंभारभरितभुवनाभ्यंतरस्य राजर्षेर्महाराजसोमप्रभस्य प्रथमतनयो लोकलोचनपूर्णचंद्रः समरमुखपराङ्मुखीकृतवैरिनरेंद्रो निजगुणामृतस्रोतनिर्वर्तितसकलजनश्रोत्ररसायनः पवित्रचरित्रपरायणः कौरवेश्वरो मेघेश्वरः । तस्मादस्मिन् संचार्येताम् । विकसितोत्पलमालाकोमले स्निग्धमुग्धसरलपक्ष्मले कौतूहलफुल्लापिते तव लोचने । २. कथमार्यपुत्रः ।

अम्हो दंक्खिदुपि इमं जणं ण प्पहवम्हि ता कहं कंठे मालं अ मोअइस्सं । ( इति सवैक्लव्यमास्ते ) ।

**प्रतीहारः**–( विभाव्य ) स्थान एव लग्नमस्याश्चेतः ।

**नवमालिका**–( सस्मितं ) पिअसहि किं अण्णदो गमिस्सामो ।

( सुलोचना साभ्यसूयवैलक्ष्यं मुखं नमयति )

**नवमालिका**–तेण हि गह्णंजदु एसा सअंवरमाला ।

( सुलोचना सलज्जमादत्ते )

**नवमालिका**–पिअसहि इदो एहि ।

( उभे उपसर्पतः )

**नवमालिका**–सहि किदत्थेहि एह्णिं तुह मणोरहाइ ।

( इति सुलोचना हस्ताभ्यां राज्ञः स्कंधे मालामामोचयति )

**विदूषकः**–( सहर्षं ) जेदु पिअवअस्सो सोत्थि होदु ।

**नंद्यावर्तः**–विजयतां कौरवेश्वरः ।

**राजा**—( सहर्षमात्मगतं ) संपूर्णो मे मनोरथः ।

( नेपथ्ये )

( कलकलांतरं । )

भो भो कौरव कौरव क्षणमिमौ सौभाग्यदर्पामयो—
च्छूनौ संगरभंगुरौ तव भुजौ पश्यंतु सर्वे जनाः ।

---

१ अहो द्रष्टुमपीमं जनं न प्रभवामि तस्मात्कथं कंठे माला च मोचयिष्ये । २ प्रियसखि किमन्यतो गमिष्यामः । ३ तेन हि गृह्यतामेषा स्वयंवरमाला । ४ प्रियसखि इत एहि । ५ सखि कृतार्थयेदानीं तव मनोरथान् । ६ जयतु प्रियवयस्यः स्वस्ति भवतु ।

भूपालाः प्रति पालयंति वहवस्त्वां युद्धबद्धस्पृहाः
कर्तुं मानविमाननां द्रुतममी हर्तुं च ते मानिनीम् ॥ ७५ ॥

( सर्वे शृण्वंति )

कथमन्यदुपक्रांतमन्यदापातितम् ।

**सुलोचना**–( सभयं ) हुं किं एत्थ सरणं । ( साविषादं ) हं कहं एत्थ हाविस्सादि ।

**विदूषकः**—कहं एरिसं इमस्स णिट्ठुरवअणं ।

**राजा**—( सकोपस्मितं ) जितकाशिता क्षत्रियडिंभानाम् ।

**नंद्यावर्तः**—( सकोपं ) अहो अहो परुषिका क्षत्रियकीटानां । यदेवं देवेऽप्यवधीरणागर्भमुदीर्यते ।

( प्रविश्य संभ्रातः )

**पुरुषः**—आर्य महेन्द्रदत्त युवराजहेमांगदस्त्वामाज्ञापयति । आनीयतामितस्त्वरिततरं वत्सा सुलोचनेति । तेन हि इत इतो भर्तृदारिका ।

( निष्क्राता सुलोचना नवमालिका प्रतीहारः पुरुषश्च । )

**नंद्यावर्तः**—देव युद्धाय सन्नद्धव्यम् । तदुत्थीयताम् ।

( सर्वे उत्तिष्ठंति )

**राजा**—( सक्रोधं ) अरे रे दुर्वीतक्षात्रियकीटाः शृणुतेमां प्रतिज्ञाम् ।

वक्षःप्रस्थात् क्षुरप्रप्रहतिविघटितग्रंथिबंधश्लथास्थ—
श्चोतन्मस्तिष्कशक्लस्थपुहिनपिशिताद्दुत्खनन्मानशंकुं ।

---

१. हंत किमत्र शरणं । २. हंत कथमत्र भविष्यति ।

त्रासातंकाज्जिहासून् प्रथमतरमसून् मोघसरंभशोच्या-
नाच्छेत्स्यत्येष रोषग्रहविधूतघृणः कौरवो भैरवो वः॥ ७८ ॥

नंद्यावर्तः—रे रे अस्थानोत्थितक्रोधाभिभूतविडंवितवीररसाः पश्यतु विश्वेपि क्षुद्राः क्षेत्रियकुलपांसनाः।

निर्मुंचन् वाणवृष्टीर्निविडनिपतनाकांडवन्द्रांधकाराः
स्वैरावस्कंदरुग्णप्रतिनृपतिशिरस्कंदसंवंधसंधीः।
कल्पांतच्यूतधाराकवलितगगनाभोगसीम्नस्समंता-
न्नंद्यावर्तोऽद्य लीलां रजयति समरे पुष्कलावर्तकस्य ॥७९॥

विदूषकः-इदो[2] इदो पिअवअस्सो।

(परिक्रम्य निष्क्रातास्सर्वे)

इति श्री हस्तिमल्लेन विरचिते सुलोचनानाटके स्वयंवरयात्रानाम तृतीयोङ्कः समाप्तः ॥ ३ ॥

---

१ कथमीदृशमस्य निष्ठुरवचनं। २ इत इत प्रियवयस्यः।

## चतुर्थोऽङ्कः ॥ ४ ॥

( ततः प्रविशति सरलिका )

**सरलिकाः**—भणिदम्हि पिअसहीए णोमालिआए । सखि कीरिसी उण सअंवरकलअणाणंतरं राअउत्ताणं पउत्तित्ति राअउलं गदुअ समंतदो जाणिअ आअच्छेति । ता लहु गच्छेमि । (परिक्रम्यावलोक्य च) ऐसो हु परिहारमहत्तरो अज्जमहिंददत्तो इदो एव अभिवट्टेदि । जाव एअं उवसप्पिअ पुच्छेमि । ( परिक्रामति ) ।

( तत प्रविशति प्रतीहारः )

**प्रतीहारः**—अहो विवेकमुग्धता क्षत्रियकुमाराणां । कुतः ?

**भूयांसः क्षितिपात्मजा वरयितुं वांच्छंति वत्सामिमां**
**सर्वस्याभिमतः स्वयंवरविधिस्तद्गाढमत्रोचितः ।**
**इत्यस्मत्प्रभुणा प्रवर्तितमभूद्यत्कर्म निर्मत्सरं**
**जातं प्रत्युत वैरकारणमिदं तेषां मुधा द्वेषिणाम् ॥ १ ॥**

इदं चैषामपुंयोग्यं पौरोभाग्यम् । यदुत ।

**अन्यं कंचन पंचबाणविधुरादन्यं धरित्रीश्वरं**
**या निर्ज्ञातगुणा स्वयं वृतवती पश्यत्सु येष्वग्रतः ।**
**तां संप्रत्यभिमानदुर्गतधियो वांछंति भूयोपि ते**
**वीभत्सोपहतां धिगस्तु विषयोन्मुग्धामिमां कामिताम् २।**

---

१ भणितास्मि प्रियसख्या नवमालिकया । सखि कीदृशी पुनः स्वयंवरकलकलानंतरं राजपुत्राणा प्रवृत्तिरिति राजकुलं गत्वा समंततो ज्ञात्वाऽऽगच्छेति । तस्माल्लघु गच्छामि । २ एष खलु प्रतीहारमहत्तरः आर्यमहेन्द्रदत्त । इत एवभिवर्तते । यावदेतमुपसृत्य पृच्छामि ।

सरलिका—( उपसृत्य ) अॆअ सअंवरवेलाकलअलाणंतरं राअउत्ताणं पउत्तिं जाणिदुं आअच्छेमि । ता भणाहि दाव ।

प्रतीहारः—तेन हि श्रूयताम् ।

सरलिका—अवहिदम्हि ।

प्रतीहारः—अस्ति तावत्स्वयंवरयात्रावसानविसंवादिमनोरथानामुज्जृंभमाणसरंभरभसगरीयानुत्थितः पार्थिवानां कलकलः ।

सरलिका—हंत्थि ।

प्रतीहारः—तत्र च—

युक्तोऽयं गुणिनां वधूर्गुणवतीत्येके प्रसन्नाः स्थिताः
स्वच्छंदप्रसरो मनोभव इति प्राप्तोपरैर्निग्रहः ।
स्वावज्ञाजनितत्रपाहृतधियस्तूष्णीमभूवन् परे
केचित्तामपहर्तुमेव समरे प्राक्रंसत क्रोधनाः ॥ ३ ॥

सरलिका—तदो तदो ।

प्रतीहारः—तेषु च प्रकृत्यमर्षणाः कुलूतेश्वरदुर्मर्षणप्रभृतयो निसर्गनिरर्गलचोद्यितं चक्रवर्तिसुतमर्ककीर्तिमुपसृत्य सोत्साहमवोचन् ।

यथा ।

आहूय शाठ्यात्सकलान्नरेंद्रा-
नकंपनः कौरवपक्षपाती ।
गुणित्वमारोपयितुं जयस्य
तस्यायमारोपयतिस्म मालाम् ॥ ४ ॥

सरलिका—परगुणेसु असहणदा राअउत्ताणं । तदो तदो ।

---

१ आर्ये स्वयंवरवेलाकलकलानंतरं राजपुत्राणा प्रवृत्तिं ज्ञातुमापृच्छामि । तस्माद्भण तावत् । २. अवहितास्मि । ३ हंत । ४ ततस्ततः । ५ परगुणेषु असहनता राजपुत्राणाम् । ततस्ततः ।

प्रतीहारः—पुनरस्यावोचन् ।

पितुस्तु संकेतमलंघनीयं
सुलोचना साप्यनुपालयंती ।
त्वयि स्थिते श्लाघ्यगुणाभिरामे
शोच्या कमप्यन्यमभूद्वृणाना ॥ ५ ॥

सरलिका—तदो[1] किं पडिपण्णं अक्ककित्तिणा ।

प्रतीहारः—ततश्च रोषोत्कर्षकषायितेक्षणेन कथितमर्ककीर्तिना ।

सरलिका—कहं[2] विअ ।

प्रतीहारः—

वाढंतेऽद्य विशीर्यंते[3] तस्मिन्नारोपिता गुणाः ।
आरोपिते ससंरंभं चापकोट्यां मया गुणे ॥ ६ ॥

सरलिका—अहो असरिसो[4] माणग्गहो

प्रतीहारः—स किं नामार्ककीर्तिः ।

सरलिका—तदो तदो[5]

प्रतीहारः—ततश्च निसर्गनिस्त्रिंशो दाशार्णः[6] समाह्वन्नर्ककीर्तिमित्थमवोचत् ।

अनास्थापर्यस्तस्तव[7] यदि न जृंभेत सपरं
कठोरः कोपाग्निर्ज्वलितुमुचितोस्मिन्नवसरे ।
कुरूणामुद्दामः प्रसरति मदः शौर्यकथया
स काशीनां राजा कलयति निजौर्जित्यविभवं ॥ ७ ॥ इति ।

सरलिका—तदो तदो[8]

---

१ ततश्च किं प्रतिपन्नमर्ककीर्तिना । २ कथमिव । ३ शिथिलीभवंति । ४ अहो असदृशः मानग्रहः ५ ततस्ततः ६ राजा । ७ औदासीन्येन नष्ट । ८ ततस्ततः ।

प्रतीहारः–निसर्गभीषणचेष्टितः सौराष्ट्रो भीमः ससंरंभमवोचत् । का वा चक्रवर्तिन आस्था विशृंखलसंख्यसंघट्टदुर्बले कुरुकाशिबले ।

तदत्र—

आस्तामप्रतिचक्रविक्रमधनः कामं भवान् प्रेक्षकः
केमी शौर्यविपर्ययप्रलघवः क्वोर्जंति ते कौरवाः
युद्धावद्धधियः पृथपृथक्गमी सज्जा वयं भूरिशः
शत्रूणां दमनाय दुर्दमभुजास्त्वभ्रूलताकिंकराः ॥ ८॥ इति ।

सरलिका–तदो तदो ।

प्रतीहारः—अनंतर चार्ककीर्तिरंतःकोपपावकस्य विप्रुष इव तत्क्षण-प्रसभकीलितारातिकंठान् वर्णानुद्गिरन्नित्थमचीकथत् । अथवा समूलकाषं नः कषणीया दोषाः ।

ततश्च—

अध्यस्तशौर्योद्धतमेव मिथ्यामध्यस्थमस्थानकृतातिसंधिं ।
किमन्यदन्यायपथप्रवृत्तमकंपनं संप्रति कम्पयामि ॥ ९ ॥

सरलिका–अह्मो अंच्चाहिद ।

प्रतीहारः–शैलीयं मानशालिनाम् ।

सरलिका–तदो तदो ।

प्रतीहारः—अत्रांतरे पार्श्ववर्ती चक्रवर्तिनैवार्ककीर्तेरनुयात्रायां नियुक्तो नीतिमार्गकृतविद्यो नाम सचिव. साधिक्षेपमवोचत् । यथा । युवराज केय पृथग्जनसुलभा प्रेक्षापूर्वकारित्वप्रवृत्तिः । किं चेदमात्मवतामनाभिमतं । दुःशिक्षितजनदुरुपदेशेषु श्रोत्रादानव्यसनम् । कश्चायं प्राकृतजनप्रवर्तितः पुरुषांतरगुणसमावर्जिताचित्तायामाग्रहो योषिति । क्व चायं परिचितः कलु-

१ युद्ध । २ ततस्ततः । ३ कण । ४ अह्मो अत्याहितं । ५ ततस्तत· ।

षानुषंगेण कलुषेतरमानसोन्मथनमन्थाः पंथाः । कुतश्चामून्यधीतानि परिहृतविवेकयंत्रणानि क्रोधोद्धतिस्वतंत्राणि वचांसि । सा खलु चक्षुष्मत्ता यदुत परपरिग्रहगर्हितेषु जनुषांधत्वं कलत्रेषु । सैव च श्रुतिमत्ता यत् किल दुर्दीतजनदुःप्रलपितेषु पुरुषस्योच्चैःश्रवत्वं । स खलु विक्रामाति यस्य निसर्गदुर्मार्गप्रसंगमलीमसैरिंद्रियमलिम्लुचैर्न मुष्यते हृदयं । अभिजातजनहारयता च भूशयाति मानिनो यशस्विताम् । विगीता रणचुंबिता च विवृणोति पुंसामचातुर्यम् ।

किं च—

अमुष्मिन् राजर्षौ प्रशमशमितस्वांतकुसृतौ
न काशीनामीशो तव विगणनासौ गुणवती ।
पितुश्चैनं नान्यं कलयति मनस्वी तव पिता
सुतानप्युद्वृत्तान्न च वृषभसूनुस्स सहते ॥ १० ॥

अपि च । का चेयं संभावना कौरवेश्वरे ।

सप्ताहं सप्तसप्तिस्थगनकृततमस्तोमविस्तारमग्ने
मूर्चापारिप्लवेऽस्मिन् भरतप्रतिबले विक्लवे प्लाव्यमाने ।
वर्षंतः संततांभःप्लुतिपिहितदिशः पुष्कलावर्तकाद्या
येनैकेनाक्रियंत ज्वलनशरमुचा भस्मसात्कारकीर्णाः ॥ ११ ॥

अथ च—

पुरस्सरणमात्रेण श्लाघ्यं चक्रं विशां प्रभोः ।
प्रायो दुःसाध्यसंसिद्धौ श्लाघते जय एव सः ॥ १२ ॥

सरलिका—दाणिं खु सो णिरवज्जो । तदो किं पडिपण्णं अक्ककित्तिणा ।

प्रतीहारः—ततश्च निरवद्यवचःसंतर्जनचरिते क्षत्रियसभे कौरवेश्वरशौर्यातिशयशंसनमसहमानः किमपि सावधीरण इव निरवद्यभाषिते रोष-

---

१. इदानीं खलु स निरवद्यः । ततः किं प्रतिपन्नमर्ककीर्तिना ।

दूषितधीरर्ककीर्तिर्धीरनिष्ठुरमभाषिष्ट । अहो आर्यस्य कौरवयशःश्लाघने किमप्यनल्पीयः कवित्वं ।

पश्य—

कथमिव जलासाराकीर्णतूलौघतुल्याः
क्षणविसरणशीला शाश्वतभ्रांतिलोलाः ।
श्वसनचलननुन्नाः शौर्यभोगावलीना
प्रथममिह निधानं कौरवस्यांबुवाहाः ॥ १३ ॥

अथवा किमत्र चर्चया ।

ख्यातः पराक्रमिषु यद्यपि कौरवोसौ
सत्यत्र युद्धनिकषेन गिरः प्रमाणं ।
आर्यस्तु पश्यतु तदस्य विशीर्यमाणं
शौंडीर्यमाशु युधि शौर्यकथासमुत्थं ॥ १४ ॥

सरलिकाः—केहं दुव्विणिदो विअ हत्थसिक्खंपि ण गिह्णदि। तदो तदो।

प्रतीहारः—अमुं च वृत्तांतमुपलभ्य महाराजः कृतयथोचितकार्यपर्यालोचनो मम हस्ते स्वाभिप्रेतं निवेद्य मामेवार्ककीर्तेर्निसृष्टार्थतया प्रस्थापितवान्। गत्वा च ततोऽहं तत्प्रतीहारनिवेदितस्वागमनश्चक्रवर्तिसूनोः पार्श्वमुपसृत्य समुचितसमुदाचारपुरस्सरमवोचम्। युवराज महाराजस्त्वामाह ।

विनीतो बाल्येपि त्वमसि पितुरेव प्रतिनिधिः
परं प्रेक्षानिघ्नः प्रकृतिमनघां मास्म विसृज ।
परेषां पैशून्यान्न हि च वचनीयान्मालिनता
कियद्वा भिन्नं मे भरत इति हेमाङ्गद इति ॥ १५ ॥

---

१ कथं दुर्विनीत इव हस्तशिक्षामपि न गृह्णाति । ततस्ततः । २ अकंपनः ।
३ विवेकाधीनः ।

किं च

कुतोपि जन्मांतररूढवासना
विबोधलब्धास्पदकौतुकेरिते ।
स्वयंवरेस्मिन्नलमन्यया धिया
परोपि मुह्यन् भवता निगृह्यताम् ॥ १६ ॥

अपि च ।

असिमषिकृषिविद्याशिल्पवाणिज्यवृत्तिः
शिवपदपदवीमप्यन्ततो दर्शयित्वा ।
अवतमसि कृतोस्मिन् विश्वधाम्ना युगेद्य
प्रतिहतनिजवृत्तिर्मा कलिश्च प्रविक्षन् ॥ १७ ॥

अपि च ।

इयं तनूजा मम रत्नमाला
गुणाधिकं त्वां सदृशी गुणेन ।
अनन्यसाधारणभागधेयं
वरं वृणीतां मदनुज्ञयैव ॥ १८ ॥

**सरलिका**—भट्टिदारिअं रअणमालं जुवराअअक्ककित्तिणो पडिच्छंतेण सुविहिदं महाराएण ।

**प्रतीहारः**—ततश्च लब्धावसरो निरवद्यः पुनरवोचत् । तदिदमिदानी-मदीनमाना दीनवमावेदितं महाराजेन यतः संप्रतिपत्तिरेव युवराजस्योत्तरमिति

**सरलिका**—तदो तदो ।

**प्रतीहारः**—ततश्च सोल्लुंठं कथितमर्ककीर्तिना । आस्तामार्यस्य प्राङ्-

१. भर्तृदारिका रत्नमाला युवराजार्ककीर्तेः प्रतीच्छता सुविहितं महाराजेन ।
२ ततस्तत ।

विवाकतेति । मां चोदिश्य कथितं । अरे योग्यः प्रतिभाति काशीपतिः साधु शिक्षयितुम् ।

स्वयंवरव्यतिकरे यौष्माकीणस्य भूपतेः ।
संकेतकूटनिष्कस्य साध्वी कूटस्थतापि सा ॥ १९ ॥

किंतु संधानमातिसंधानमिति द्वे इमे न क्वापि संभावितेवऽतिष्ठेते ।

ततश्च—

प्रयुंजानो मोहात्कपटमिममस्मास्वनुचितं
नृपालो युष्माकं फलमुचितमस्यानुभवतु ।
अयाथातथ्योत्थस्वगुणघटनोत्तेजितमदः
शरव्यः कौरव्यः स भवतु शराणां मम युधि ॥ २० ॥

सरलिका—[1]कहं पुणोवि सो एव्व सिद्धतो ।

प्रतीहारः—ततश्च निरवद्य इदमवोचत् । युवराज आतिक्रातोसि । शिक्षेयं किंचिच्छ्रूयताम् ।

साक्षादसि त्वं भरतस्य सूनु-
राद्यस्य पुंसोपि तृतीय एव ।
तन्नार्हसि त्वं मनुवंशकेतोः
स्रष्टु युगस्याविनयप्रतिष्ठाम् ॥ २१ ॥

किंच ।

त्वं काशिराजस्य सुतां यदिप्सुः
सुतापि तुभ्यं प्रतिपादितैका ।
मा सैनिकास्ते कुशला युधीति
मंस्थाः प्रभूतः कुरुकाशिवर्गः ॥ २२ ॥ इति ।

१ कथं पुनरपि स एव सिद्धात. ।

सरलिका—तदो तदो ।

प्रतीहारः—ततश्चार्ककीर्तिः ससंरंभमवोचत् । यथा आर्य अस्त्येवैतत् । किं तु ।

नाहं सुलोचनार्थ्यस्मि क्षात्रो धर्मस्तु पाल्यते ।
तातस्यापि न विद्वेषो निग्रहे कूटकारिणाम् ॥ २३ ॥

अथ च ।

द्वैधीभावं भजतु सहसा संहतो राजवर्गः
कामं वासौ पततु निखिलः शात्रवे पक्ष एव ।
किं नश्छिन्नं ननु रिपुशतोन्माथकीनाशदण्डौ
सन्नद्धौ मे समितिषु भुजावेव साहाय्यकाय ॥ २४ ॥

ततश्च—

जयावाप्त्युद्भूतप्रमदभरसंवर्धितमदं
मदीयं पादांतं सपदि समरे पश्यतु भवान् ।
कुरूणां तत्सैन्यं जयविरहदैन्यप्रतिहतं
जनः स्वैरं शोचत्वविनयफलास्वादचकितम् ॥ २५ ॥

सरलिका—अहो कक्कसदा सहावस्स । तदो तदो ।

प्रतीहारः—ततश्च निरवद्यः सानुशयविशादमेवमवादीत् । धिक्कष्टं । लघुकृतोस्मि दुर्विनीते मामटीकुर्वता चक्रवर्तिना । यदमुना बहुधापि शिक्षितेन जितकाशिता केवलं प्रकाशितेति । अर्ककीर्तिना पुनर्दत्तमुत्तरं न केवलं मे जितकाशितैव, कुरूनपि जितानेव विद्धि इति ।

सरलिका—हं[3] चक्कवट्टितणओ एव्वं कुप्पेदित्ति जं सच्चं अच्चहिदं संकेदि मे हिअअं ।

---

१ ततस्ततः । २ अहो कर्कशता स्वभावस्य । ततस्ततः । ३ हंत चक्रवर्तितनय एवं कुप्यतीति यत्सत्यमत्याहितं शंकते मे हृदयं ।

प्रतीहारः—अलमत्र तावत् शंकया सोपि मेघेश्वर एव ।

सरलिका—ण आणामि दुव्वंचिआ अत्थ संधी करोदुं[1] ।

प्रतीहारः—इत्थं च विग्रहैकरुचौ प्रत्यवस्थिते चक्रवर्तिसुते निरवद्यः सनिर्वेदनिश्वासमुत्थाय चिंतावेगमूक एव निरगमत् ।

सरलिका—तदो[2] तदो

प्रतीहारः—अहं च तूष्णीक एव निर्गच्छंतं निरवद्यमन्वयाशिषम् ।

सरलिका—तदो[3] तदो

प्रतीहारः—निर्गत्य च निरवद्येन लेखार्पितेनैतद्वृत्तांतेन त्वरितवियल्लंघनजंघालं विद्याधरदूतद्वयं तत्क्षणमेव चक्रवर्तिनः पार्श्वं प्रस्थापितम् । मयाप्यागत्य यथा वृत्तं सर्वमेतन्महाराजं निवेदितम् ।

सरलिका—तदो[4] तदो ।

प्रतीहारः—श्रुत्वा च महाराजः क्षणमिव स्तिमितः स्थित्वा सनिर्वेदमवादीत् । कष्टं भो संकटे पतिताः स्मः ।

सुतः कुरोरेकतरस्तयोर्द्वयोः
परः पुरोरेव सुतस्य नंदनः ।
द्विषद्भवेय कतरस्य वत्सयो—
र्वर तदत्राप्रतिपत्तिरेव नः ॥ २६ ॥

सरलिका—तारिसं[5] खु तारिसाणं हिअअं ।

प्रतीहारः—आज्ञापितश्चाहं महाराजेन । भो महेंद्रदत्त किंबहुना । दैवमेवात्र स्वमनीषितमाचरतु । तादिदानीं मद्वचनाद्वत्सं हेमांगदं ब्रूहि । निष्क्रांतेषु संग्रामाय विग्रहव्यग्रेषु राजपुत्रेषु सार्यतां पुरमार्गेषु दुर्गरोधप्रतिहतारिप्रपंचाः पांचालिकाः । रक्ष्यंतामारक्षिकैः स्थिरावस्थानानि गुल्मकस्थानानि । निखिलीक्रियंतां निखिलानि पुरद्वाराणि । दुर्विभेदा व्यतिकीर्य-

१ न जानामि दुर्वंचिता अत्र सधी कर्तुम् । २ ततस्तत. । ३ ततस्तत । ४ ततस्तत । ५ तादृश खलु तादृशाना हृदयम् ।

न्तां सुदृढमर्गलादंडाः । प्रगुणीक्रियंतां गाढतरसंघट्टा अट्टालिकबंधाः । प्रवेश्यंतां च प्रतोलीमुखेषु विशिखांतरेषु च सन्नद्धयोधाधिष्ठितास्संनाह्या गंधहस्तिनः। प्रवर्त्यंतां च राजमार्गेषु संरब्धाश्ववाराणि दंशितगात्राण्यश्वीयानि। स्थाप्यंतां च चत्वरेषु प्रयोग्ययुग्ययोजिताश्चतुरधीसारथीसनाथा रथाः । नियोज्यंतां च परितः परिहृताविपत्तयः । पाग्हार्यंतां च सुसंनद्धेनांतर्वंशिकजनेन राजगृहबाह्याली । स्वयं च वस्तेन वाराणसीरक्षणे यावत्समरावसानं सावधानेन भवितव्यमिति ।

( नेपथ्ये, कलकलः । )

सरलिका—किं दाणिं एदं ।[1]

प्रतीहारः— ( विभाव्य ) कथं प्रचालितमेव संग्रामाय राजन्यकेन । संप्रति हि ।

रसति समरभेरी भैरवारावधीरं
चलितनृपतिसंख्योद्योगशंखा ध्वनंति ।
प्रसरति च चमूनां प्रस्तरोधोन्तरालः
कलकलनिनदोऽयं काहलध्वानगर्भः ॥ २७ ॥

सरलिका—जाव इमं उत्तत्तं पिअसहीए णोमालिआए णिवेदेमि ।[2]

प्रतीहारः—यावदहमपि युवराजहेमांगदाय महाराजनियोगं निवेदयामि ( परितो विलोक्य ) अहो महती समरयात्रा ।

तथाहि—

विदधति नृपतीनां विश्वतोप्यश्नुवाना
धरणिमनवकाशां निष्पतंतो ध्वजिन्यः ।
विदधति रणनाट्यप्रेक्षकाणां समंताद्
गगनमपि विमानान्यद्य वैमानिकानाम् ॥ २८ ॥

( निष्क्रांतौ )

---

१ किमिदानीमेतत् । २ यावदिमं वृत्तांतं प्रियसख्या नवमालिकाया निवेदयामि ।

## मिश्रविष्कंभः ।



( ततः प्रविशति आकाशयानेन विमानारूढो रत्नमाली मंदारमाला पार्श्वतो मन्थरकश्च )

**रत्नमाली**—प्रिये मंदारमाले चिरादुपस्थितमेतदतर्कितहेतुकं नः कौतुकं । कुतः ।

एको जयः प्रगुणविक्रमलब्धकीर्ति—
र्मानग्रहग्रहिलधीरपरोऽर्ककीर्तिः ।
तस्मात्फलिष्यति तरामनिमेषतैषा
सप्रेक्ष्य युद्धमिह कौरवपौरवीयम् ॥ २९ ॥

**मंदारमाला**—देवे कुदो खु णिरवज्जरज्जाणिव्वहणाणिग्गहिदसअललोअविग्गहे पलाअतेवि भारदवरिस अप्पडिहदचक्केवि चक्कवट्टिभरहे, ईरिसाणं दुव्विणीआसंगसुलहाणं परक्कमो राअउत्ताणं ।

**मंथरकः**—किं करोदु एत्थ महाराअभरहो सहावदुव्विअड्ढाण सअं वा देवो भारदवरिससिहामणिं केलाससेलं अहिवसंतो ।

**रत्नमाली**—एवमेतत् ।

वैयात्यं सहजं नृणां दमयितुं नैवापरैः पार्यते
भुञ्जन् भारतवर्षमद्य स हि किं कुर्यादिमानीश्वरः ।
पश्य स्थाणुरपि श्रुतीरुपदिशन्नास्थाय दिव्यां सभां
कैलाशाचलमौलिमत्रभगवानध्यास्त एवेश्वरः ॥ ३० ॥

---

१. देव कुतः खलु निरवद्यराज्यनिर्वहणनिगृहीतसकललोकविग्रहे पलायत्यपि भारतवर्षमप्रतिहतचक्रेपि चक्रवर्तिभरते ईदृशानां दुर्विनीतासंगसुलभानां पराक्रमो राजपुत्राणां । २ किं करोत्वत्र महाराजभरतः स्वभावदुर्विदग्धानां स्वयं वा देवो भारतवर्षशिखामणिं कैलाशशैलमधिवसन् ।

**मंदारमाला**—किं बहुणा आरोविदा सोहग्गस्स अंतिमतुलं अकंपणसेवासिणी।

**मंथरकः**—देवे दक्ख दक्ख कत्थइ णिरंधसरअसमअतुरअणिअरकठोरखुरघादखंडणवड्ढिदा कत्थइ समंददो सरभसचलंतविअडगुडिअगंधसिंधुरणिवहचलणचंपडणसमुप्पइआ। कत्थइ णिरंतरचरंतपाइचक्कपअपरिवट्टणसमुट्ठिदा। कत्थइ अविच्छिण्णगच्छंतसंदणचक्कुक्केरकंडणविवड्ढिदा अंधावेइ महीअलवलोट्ठिदा सअलं वि दिसावलअं मज्जदूली जालोली।

**रत्नमाली**-( विलोक्य )

> चमूविमर्दक्षतभूतलोत्थितो
> रजीकृताशेषदिनेशदीधितिः।
> रजःप्रतानः प्रगुणं प्रकाशयन् ॥ ३१ ॥ ( ? )

किंच।

> ख्यातः पूर्वं जगति समरो मत्कृते भूपतीनां
> कांचित् कन्यां प्रति रणमिदं तद्यशो मे प्रमार्ष्टि।
> इत्युद्भूतात् प्रकृतिसुलभात् स्त्री नु सा यत्नवैरात्
> क्वापि क्षोणीघनतमरजश्छद्मना गच्छतीव ॥ ३२ ॥

**मंदारमाला**—अहो को एत्थ अक्ककित्ति को वा कोरवेसरो।

---

१ किं बहुना। आरोपिता सौभाग्यस्यातिमतुलामकंपनसुवासिनी। २ देव पश्य पश्य कुत्रचिन्निरंध्रसरयसमदतुरगनिकरकठोरखुरघातखंडनवार्धिता। कुत्रचित्समंततः सरभसचलद्विकटकूरगंधसिंधुरनिवहचरणसंमर्दसमुत्पतिता। कुत्राचिन्निरंतरचरत्पदातिचक्रपदपरिवर्तनसमुत्थिता, कुत्रचिदविच्छिन्नगच्छत्स्यंदनचक्रोत्करकर्षणविवार्धिता अंधापयति महीतलप्रलुठिता सकलमपि दिशावलयं मध्यधूलीजालालिः। ३ अथ कोत्रार्ककीर्तिः को वा कौरवेश्वरः।

**रत्नमाली**—नन्वयमागतः सर्वमेतद्विदित्वा वाराणसीं प्रति प्राहितो मंदरः।

( प्रविश्य )

**मंदरः**—जयतु देवः ।

**रत्नमाली**—अयि मंदरक किमाधिगताखिलप्रवृत्तिरसि ।

**मदरः**—देव सर्वमेव विदितं मे कर्तव्यं जनस्य ।

**रत्नमाली**—तेन हि शृणुमः ।

**मदरः**—देव किं बहुना ।

**जित्वा कौरवमाहवे नृपसुतां हर्तुं प्रतिज्ञातवान्**
**औद्धत्येन स पौरवः शमयितुं तस्योद्धतिं कौरवः ।**
**द्वैतेस्मिन् प्रशमी स काशिनृपतिः प्रोज्झन् द्वयोः पक्षतां**
**संप्रेक्ष्यात्मन औचितीं दुहितरं रक्षन् पुरेऽवस्थितः॥ ३३ ॥**

**रत्नमाली**—अहो जामातृत्वमपि कौरवेश्वरस्य नावेक्षितं माध्यस्थैकरुचिना काशीपतिना । अथ सर्वमन्यद्राजकं कथमवृतत् । अथवा किमत्र प्रश्नेन । न खलु हार्तुं प्रभवंति चक्रवर्तिसूनोः पक्षता सर्वेप्युर्वीभृतः ।

**मंदरः**—एवमेतत् । किंतु एक उज्जयनीपतिर्जयताश्चिराविरूढसौहार्दचोदितः कौरवस्य पक्षतां प्रत्यवादि ।

**रत्नमाली**—बलीयो हि प्रभविष्णुताया अपि सौहार्दम् ।

**मन्थरकः**—अथ कि पडिवण्णं विज्जाहरेहिं ।

**मंदरः**—

**विशां प्रभोरात्मजमर्ककीर्ति-**
**पैतृष्वसेयं सुनमिः प्रपन्नः ।**
**मेघप्रभोऽभूत्प्रविचिंत्य मातृ-**
**ष्वस्रीयतामस्य जयस्य गृह्यः॥ ३४ ॥**

१ अथ किं प्रतिपन्नं विद्याधरैः ।

**रत्नमाली**—युक्तमेतत् । क्व पुनरन्ये ।

**मंदरः**—

स यत्राभूद्विद्याधरमुकुटसंघट्टकषण-
क्वणत्पीठीकोणस्सुनमिराधिपो राजतगिरेः ।
उदीच्यो भूपोपि त्वरितमथ संभूय सकल-
स्तदायत्तस्तत्तत्स्वयमजनि विद्याधरजनः ॥ ३५ ॥

**रत्नमाली**—तदप्युपपन्नम् ।

**मंदरः**—ततश्च सर्वेपि निर्वाणारस्यः समासाद्य समास्थिरा निरुत्खातिनीमप्पंककंटकादिदूषितां युद्धभूमिं सुविभक्तकक्षपक्षोरस्यान्यनीकानि व्यूह्यामी संप्रास्थिता । पश्यतु च देवः ।

चक्रव्यूहं विभज्यास्ते योसौ रथमधिष्ठितः ।
स चक्रवर्तिनस्सूनुरर्ककीर्तिः पराक्रमी ॥ ३६ ॥
विभज्य मकरव्यूहं योसौ स्यंदनमास्थितः ।
स कौरवो जयः कांत्या साक्षान्मकरकेतनः ॥ ३७ ॥

इतोपि ।

विभज्य गरुडव्यूहमध्यास्ते सुनमी रथम् ।
मेघप्रभोऽमुं व्यूहेन दुर्जनं विजिगीषते ॥ ३८ ॥

इतोपि ।

सुकेतुः प्रविभज्यास्ते व्यूहं पारिपतंगकम् ।
तं व्यूह्य सर्वतोभद्रं जयंतो विजिगीषते ॥ ३९ ॥

**मंथरकः**—कहं इमेहि समआलवज्जंतकंसिकंसालजअघंटिसंखसिंग-

---

१. कथमेताभ्यां समकालवाद्यमानकांस्यकास्यतालजयघंटाशंखशृंगकाहलतुरि-तुरीडमरुकाढिमिलर्डिंडिमिमर्दलदुंदुभिकरडपटहहुडुं कुडुं ढका भेरी भंगाप्रभृति भूरि

काहला तुरुतुरीढमरुअडिमिलडिंडिममद्दलदुंदुभिकरडपडहहुडुंकुडुंडुक्का-भेरीभंगापहुदि भूरिवज्जभंडतुमुलकोलाहलवहलणिग्घोसणिव्विग्घविअणडि-अकोऊहलपेल्लिदेहि झडंति ढक्किअसअलगअणाभोअपेरंतो परोप्पराहि विमुक्को दुवेहि वलेहि संगामणाडअपुव्वरंगकुसुमंजलिसरणिअरो ।

मंदर.—देव पश्य पश्य ।

निशितधवलधारास्तिग्मरोचिर्मरीचि-
प्रतिफलितफलांतावेगदीर्घोपलब्धाः ।
निविडमभिपतंतस्संततोल्का करालाः
गगनमनवकाशं पत्रिणश्चित्रयंति ॥ ४० ॥

( विलोक्य ) कथमधुना—

इषूणामन्योन्यप्रतिहतिषु लब्धप्रसूतिभिः
स्फुटज्ज्योतिश्चक्रस्खलनविनिकीर्णोडुरुचिभिः ।
स्फुरंतीभिः प्लोषग्लपितशरपक्षाभिरभितः
स्फुलिंगाभिर्व्योमस्फुटमनलवृष्टिं नटयति ॥ ४१ ॥

मंदारमाला—केहं दाणिं सरसहस्सवारिदसत्तिपाससंघट्टभीसणो चलंतदोघंटघडाकरालो पअट्टंततुरअच्छटभअंकरो ओवडंतसंदणसंदोहभआणवो वट्टेदि रोमहस्सणो जुन्द्धसंमद्दो ।

---

वाद्यभाण्डतुमुलकोलाहलवहलनिर्घोषनिर्विघ्नोत्पादितकौतूहलप्रेरिताभ्यां झटिति स्थगितसकलगगनाभोगपर्यंत परस्पराभ्यां विमुक्तो द्वाभ्यां वलाभ्यां संग्रामनाटकपूर्वरंगकुसुमांजलिशरनिकरः । १ कथमिदानीं शरसहस्रवारितशक्तिपाशसंघट्टभीषणः चलद्द्विपघटाकरालः पर्यटत्तुरगच्छटाभयकरोऽवपतत्स्यंदनसंदोहभयानको वर्तते रोमहर्षणो युद्धसंमर्दः ।

मंदरः—

अयमिह सुभटानां शौर्यसारोद्भटानां
रणरसरसिकानां वर्तते वर्धते च ।
शरशतविनिपातक्षुण्णसर्वाभिसारः
प्रचुरसमभिहारस्सांप्रतं संप्रहारः ॥ ४२ ॥

मंदारमाला— [1]अम्हो भीसणाद संपराअस्स ।

रत्नमाली—कथमुदग्रसंपेटकठोरः संग्रामः । तथाहि ।

क्षुंध्याघूर्णय कुट्टय क्षिपदहव्यारंध संधानय
भिंधि छिंधि मथान ताडय जहि व्यावर्तयापातय ।
विद्ध्यास्फालय भंज रुंधि विकर व्याकर्ष घर्षोद्धरे-
त्येवं प्रायमिहोच्चरद्वच इदं व्याजायते व्योमनि ॥ ४३ ॥

मंदरः—[2]नन्वेष स्वयंवरकलहोपदेशप्रथमोऽध्यायः कुलूतेश्वरो दुर्मर्षणोसौ ।

ख्यातः संख्यपटीयसां मुखपटीमुत्क्षिप्य दत्वा प्रिय-
व्याहारानधिमस्तकं करतलास्फालेन संभावयन् ।
संग्रामावसरप्रधाननिविडश्चोतन्मदश्चोतसं
सोत्सेकोज्वलितांकुशः करटिनं प्रोत्साहयत्याहवे ॥ ४४ ॥

अहोस्य पराक्रमप्रक्रमः । यद्यनुरूपमस्य निर्वहणमपि स्यात् ।

भोः पश्य पश्य ।

चरति युधि विलोहितानन-
त्विषमधिरुह्य कुलूतभूपतिः ।

---

१ अहो भीषणता सापरायस्य । २ अस्मात्पूर्व मथरकस्योक्तिःप्राकृतभाषाया भवनीया तस्याःपाठो त्रुटितःपरं संस्कृतच्छायैव प्रकाश्यते-" अथ क एष प्रक्षरद्दानसलिलनिर्झरदुर्दिनं विंध्याशिखरसमुत्तुंगदीर्घाङ्गं प्रतिपक्षसैन्यरुधिरद्विगुणशृंगारितोज्ज्वलागं मातंगमारूढोऽवधीरितदुःखवेदनोऽर्ककीर्तिबलस्याग्रेसरो भवति " ।

हरितमलघु सत्त्वमुन्नतं
पवनजवं गजमांगरेवकम् ॥ ४५ ॥

**मंथरकः**—को एस जिण्णखंभदीहरपरुससुण्डादंडसहेलाअट्टसम्मद्दिद-सैंधवाणिवहं चप्पपाअपीडणमङ्घत्तिअपाइक्कं रहसपह जणहत्थिदहत्थिजूहं गंधगइदं आरूढो कुलूदेसरं अभिजुज्जदि ।

**मंदरः**—एष खलु कौरवेश्वरशरीरनिर्विशेषो नंद्यावर्तो नाम प्रियसखः ॥

**रत्नमाली**—अहो नंद्यावर्तस्य कृतहस्तता ।

तथाहि ।

मूध्नः स्फोटयति द्विषां क्षिपणिभिर्लोहान् क्षिपन् गोलकान्
कुंतैः कृंतति शक्तिभिर्विशसति प्रासैर्विपर्यस्यति ।
पर्यायेण करद्वयार्पितधनुर्विष्वक् शरान् वर्षति
व्यूहानेष विसास्थया विघटयन् विक्राम्य विभ्राम्यति ॥ ४६ ॥

**मंदरः**—देव पश्य पश्य ।

ततश्चाब्दच्छायं प्रथनचतुरं भूरि परितः
स्रवंतं स्रोतांसि प्रचलमखिलश्रांतिसहनम् ।
असौ नंद्यावर्तस्त्वरयति कलिंगोद्भवमिभं
कुलूतानामीशं प्रसभमभियोक्तुं प्रकुपितः ॥ ४७ ॥

**मंथरकः**—कहं दूरदो एव्व णंदावत्तकरविमुक्केण विद्धो वाणेण कुलूदेसरस्स दाहिणो भुअसिअरो ।

---

१ क एष जीर्णस्तंभदीर्घपरुषशुंडादडसहेलार्पणसमर्दितसैंधवनिवहं विशालपादपीडनमर्दितपादातिकं रसप्रभंजनमर्दितहस्तियूथ गंधगजेद्रमारूढः कुलूतेश्वरमभियुध्यते २ कथं दूरत एव नंद्यावर्तकरविमुक्तेन विद्धो वाणेन कुलूतेश्वरस्य दक्षिणो भुजशिखरः ।

मंदरः—देव पश्य पश्य ।

रिपुशरमुखखंडिताङ्गजात्
समरखरस्य कुलूतभूपतेः ।
क्षरति रुधिरपूर्णसारणी
स्रुतिरिव वीररसस्य निस्सृता ॥ ४८ ॥

मंथरकः—[1]कहं अणपेक्खिदवाणघादेण परोप्परदंतभिडणखडक्कारमुहरं झडंति संघटिदो गओ णंदावत्तगएण ।

रत्नमाली—हंत भोः ।

प्रहतो यो मुखाद्दंतान्नंद्यावर्तस्य दंतिना ।
दंती सीदति कौलूतं क्षेपयन् खर्वितापरः ॥ ४९ ॥

मंदारमाला—[2]हंत्थि पाडिदो एव्व एसो हत्थिसामंतेण ।

मंदरः—आशंसोचितमेव लब्धं कौलुतेन । श्रूयतामस्य युयुत्सोः सोत्सेकं वचः ।

अवश्यं कर्तव्यं कतिचिदतिवाह्यापि दिवसा-
नलं विद्युल्लेखाविलसितविलोलैः कदसुभिः ।
प्रभूतं क्रीणंतु प्रथनविपणौ विक्रमपणै-
र्यशस्थास्नु ज्योत्स्नाशुचि रणरुचि व्यग्रमनसः ॥ ५० ॥

मंथरकः—[3]तेंण हि सुट्ठु णिउऊढं इमिणा णं उइअं ।

मंदरः—देव पश्य पश्य ।

भूयिष्ठमग्निशरसंचयसंततांगः
शेते करी रदनरुग्णधरः परासुः ।

---

१. कथमनवेक्षितवाणघातेन परस्परदंतोत्पीडनकटात्कारमुखरं झटिति संघटितो गजो नंद्यावर्तगजेन । २. हंत पातित एव एष हस्ती सामंतेन । ३. तेन हि सुष्ठु निर्व्यूढमनेन ननूचितम् ।

विभ्रच्छरीरमधिकोच्छ्रितिकोप्यपूर्वः
सर्वांगसंगशललः शलली यथैव ॥ ५१ ॥

मथरकः—अह को एस गमणजवेण सव्वदो संगरंगणं दीसंतं आजाणअं तुरगरअणं आरूढो करालकरवालवावडकरो अक्ककित्तिबलं लोलावेदि ।

मंदरः—अयमपि विशारदनामा नंद्यावर्तसमः कौरवेश्वरस्य ।

रत्नमाली—किं नाम दुष्करमनयोस्सुहृदा कौरव्येण ।

मंदरः—

भुजाविमौ द्वौ कुरुनंदनस्य
सुदुर्जयौ विक्रमसूत्रधारौ ।
स्वयं गृहीताहवचेष्टिताभ्या-
माभ्याममुष्याह्रियते युयुत्सकाः ॥ ५२ ॥

रत्नमाली—अहो श्लाघनीयं शौर्यचातुर्यकं विशारदस्य ।

अस्य हि—

छिनत्ति स्वच्छंदं सरसकदलीच्छेदमधुना
तुरंगान्मातंगान् प्रचुरमभितोपि प्रतिभटान् ।
किरन् पेशीराशास्वभिहतिरटत्कीकसतती-
र्नृशंसो निस्त्रिंशस्त्रिदशयुवतीत्रासरसदः ॥ ५३ ॥

मंथरकः—अध को एस अप्पडिहदगइपसरं गंधवारणं पेल्लंतो विसारदं अभिजुज्जदि ।

---

१. अथ क एष गमनजवेन सर्वतस्संगरागणं दृश्यमानमाजानेयं तुरगरत्नमारूढः करालकरवालव्यापृतकर. अर्ककीर्तिवलं लोलापयति । २. अथ क एष अप्रतिहतगतिप्रसरं गधवारणं प्रेरयन् विशारदमभियुध्यते ।

**मंदरः**—एष दाशार्णः संकर्षणः । पश्यतु देवः ।

> **महामोदमदं युद्धसहमारुह्य पीवरम् ।**
> **दाशार्णोऽभ्येति दाशार्णं गजं वाजिपुरोषणं ॥ ५४ ॥**

**मंथरकः**—कहं[1] दूरदो एव्व विसारदेण संकरिसणगअं उद्दिसिअ विमुक्को कअंतजीहादीहरो पासो ।

**मंदरः**—हंत भोः ।

> **मग्नेन निर्याणपथे स दंड—**
> **प्रासेन भिन्नः प्रथमः प्रभिन्नः ।**
> **प्रयाति निर्याणमसौ विनिघ्नन्**
> **दंती दशार्णाधिपतेर्मदांधः ॥ ५५ ॥**

**मंथरकः**—हद्धि[2] हद्धि ।

**रत्नमाली**—कथमुपेक्षित एव विशारदेन वाहनाविकलो दशार्णवः । साधुविशारद साधु मानभरोद्वहनवैवधिकोसि ।

**मंथरकः**—अ[3]त्थ को एस अवरो गंधगआहिरूढो तं एव विशारदं अभिजुज्जदि ।

**मंदरः**—एष सौराष्ट्रो भीमः ।

**मंदारमालाः**—हद्धि[4] हद्धि अजगरभोगभीमेण सुंडादंडेण वेडिदो विसारदतुरंगमो भीमगइंदेण ।

**रत्नमाली**—अहो विशारदस्य वैशारद्यम् ।

---

१. कथं दूरत एव विशारदेन संकर्षणगजमुद्दिश्य विमुक्तः कृतांतजिव्हादीर्घः प्रासः । २ हा धिक् हा धिक् । ३ अथ क एषो अपरो गंधगजाधिरूढस्तमेव विशारदमभियुध्यते । ४ हा धिक् हा धिक्, अजगरभोगभीमेन शुंडादंडेन वेष्टितो विशारद-तुरंगमो भीमगजेंद्रेण ।

अनेन हि—

खड्गेन हेलोद्भ्रमितेन पद्म-
कांडांकुरच्छेदननिर्विबंधम् ।
आमूलमालूनसदंतहस्तो
भीमस्य हस्ती विहतो विहस्तः ॥ ५६ ॥

मंदरः—कथं मुक्ताक्रंदनमसौ परिवृत्य प्रपलायते । देव पश्य पश्य ।

सौराष्ट्रस्यैष सौराष्ट्रः करी लघु पलायते ।
बलवानपि संग्रामे हीनः शिक्षापराङ्मुखः ॥ ५७ ॥

मंथरकः—अंध को एसो आअच्छदि पिव चंडणअरपरिहगुरुअद-तग्गलं असिथिलमांसलंगं परक्कमकक्कसं एरावदसरिसं चेदिकरूसं गअं आरूढो कोरवबलं अलंकरेदुं ।

मंदरः—

असौ कुरूणामनवग्रहश्चरन्
निरंमदो नाम पताकिनीपतिः ।
उदेति मेघेश्वर एष संमदं
दधन् विभिंदन् प्रतिपक्षभूभृतः ॥ ५८ ॥

मंथरकः—को इमो पडिहदपडिपक्खमणरहं रभसतुलिदपत्तरहं रहं आरूढो इमं अभिजुज्जादि ।

मदरः—एष खलु बाहुबलिसूनुर्महाबली ।

---

१ अथ क एष आगच्छतीव चडनगरपरिघगुल्कदंतार्गलमशिथिलपासलागं पराक्रमकर्कशमैरावतसदृश चेदिकरूशं गजमारूढः कौरवबलमलंकर्तुम् २. क एषः प्रतिहतप्रतिपक्षमनोरथं रभसतुलितपत्त्ररथं रथमारूढ इममभियुध्याति ।

**रत्नमाली**—

> विमतमथनक्रोधाविष्टं विशंकटकंकट-
> स्थपुटघटितस्फीतोरस्कं गृहीतशरासनम् ।
> शरधिपरिणद्धां सप्रांतं कृतांतभयंकरं
> वपुरिदमहो श्लाघ्यं वश्यां करोति जयाश्रियम् ॥५९॥

**मंदारमाला**—हद्धि हद्धि । णिवडपसरणिरंतरओगाहिअअउव्वलहिअमवाउरा सारिच्छाहिं संछण्णो कुमारेण कोरवसेणावइस्स वारणो वाणधाराधोरणीहिं ।

**रत्नमाली**—अहो प्रागल्भ्यमस्य करिणः ।

> निबिडमभिपतंतीं बाणवृष्टिं प्रतिच्छन्
> सरभसमुपपद्य क्रोधनिर्बंधरौद्रः ।
> सरथितुरगसूतं शुंडयोत्क्षिप्य तूलो—
> च्चयमिव रथमेषः क्षिप्तवान् वारणेंद्रः ॥ ६० ॥

**मंथरकः**—अहो[2] अच्चरं एसो खु सहसत्तिरहादो लहु पडिय विवत्तो धणुलट्ठिं अवट्ठव्विअ सुसंठिदो महीवट्ठे कुमारो ।

**मंदारमाला**—दिट्ठिआ[3] अक्खदसरीरो कुमारो ।

**मंदरः**—कथमिरंमदद्विरदनोपि सर्वांगिसंगिसायकप्रोतशरीरः प्रहारमूर्च्छितः प्रसार्य पूर्वकायं भूमौ निषण्णः ।

**मंथरकः**—कह[4] इमो दिण्णरत्तचंदणथासअभूसिदंगो ओदिण्णो खंदादो सिंधुरस्स ।

---

१. हा धिक् हा धिक् । निविडप्रसरनिरंतरावगाहितापूर्वयष्टियमवागुरासदृक्षाभिः संछन्नः कुमारेण कौरवसेनापतेर्वारणो वाणधोरणीभिः । २. अहो आश्चर्यमेष खलु सह शक्तिः रथाल्लघु पतित्वा विवलान् धनुर्यष्टिमवष्टभ्य सुसंस्थितो महीपृष्ठे कुमारः । ३ दिष्ट्या अक्षतशरीरः कुमारः । ४ कथमेष उदीर्णरक्तचंदनस्थासकभूषितांगोऽवतीर्णः स्कंधात् सिंधुरस्य ।

रत्नमाली—द्वयोरपि वाहनभग इति कृतमेतत् ।

मंदरः—

सप्तच्छदामोदसखं मदांभः
शिलीमुखाः कामवपुः परासोः ।
तानद्य निर्धाट्य कटांतलग्नान्
शिलीमुखास्तीक्ष्णमुखाः पिबंति ॥ ६१ ॥

रत्नमाली—अथ काविमौ प्रजविवाजिपृष्ठाधिरूढौ समरसंमर्ददुर्दमौ परस्परमयुंजाते सवयस्कौ राजकुमारौ ।

मंदरः—देव !

अर्ककीर्त्यवरजस्तुरगस्थः
स्थैर्यशौर्यसदृशं तुरगस्थम् ।
संजयंतमजितंजय एनं
कौरवानुजमसावभियुङ्क्ते ॥ ६२ ॥

रत्नमाली—न परस्पर हीयते रणकर्मणि कुमारौ ।

मंदरः—देव इतः पश्यतामन्यदाश्चर्यम् ।

अन्योन्याघातभग्नस्थिररदनमुखौ संसृजत्पूर्वकाया—
वष्टंभस्तब्धवेगौ समतुलितबलौ यंतृणासक्तहस्तौ ।
मर्माविच्छिन्नवक्रक्षतिमथिततनू प्राप्य विक्रांतिकाष्ठा—
मुक्रांतौ दंतिनौ द्वौ कथमनिपततौ तिष्ठतोऽमुहूर्तम् ॥ ६३ ॥

इतः पश्य ।

मर्मसु हता अपि शूराः प्रायोपगमनमानिच्छवः केचित् ।
धीराःस्वर्गं वीराः प्रापन् प्रायोपगमनेन ॥ ६४ ॥

मंदारमाला—हण्डे मंदरअ । णिरंतरुप्पइअखुरप्पकडप्पपसप्पणगुत्तण-

---

१ सखे मदरक निरंतरोत्पतितक्षुरप्रसमूहप्रसर्पणगुप्तनभ स्थलदु प्रेक्षोऽप्रतिहतरथ मधिरथमधिरुह्यार्ककीर्तिबल चमत्कुर्वन् किमेष कुमारजयंतः ।

हस्थलदुप्पेक्खो अप्पाडिहदरअं अहिरहं अहिरोहिअ अक्काकित्तिबलं चमक्करंतो किं एस कुमारजअंतो ।

मंदरः—एवम् ।

अवेहि सैन्यं द्विषतां जयंत-
ममुं मघोनस्तनयं जयंतम् ।
न व्यज्यते यस्य जवादिषूणा—
माधानसंधानविमोक्षकालः ॥ ६५ ॥

रत्नमाली—अहो उग्रता समरकर्मण्युग्रकुलकुमारस्य ।

मंथरकः—किं [1]एस आणिट्ठिदअट्ठाविदवाणतंटसंघटखंडिदवइरिसरासारो तिहुअणेक्कल्लराहिओ इमं अभिजुज्जंतो कुमारसुकेदू ।

मंदरः—

अवेहि विद्विषिभयैकहेतु—
ममुं सुकेतुं हरिवंशकेतुम् ।
द्विषां करोत्याशु विलक्षतां यः
शरैः शितानामपि तच्छराणाम् ॥ ६६ ॥

रत्नमाली—मन्ये नाम परस्परस्य जेतुं प्रभवतः ।

मंदरः—इतो दृश्यतां छलबहुलं वैद्याधरं युद्धं । एष खलु लोहार्गलाधिपतिरनर्गलचोद्यमानवातपमीप्रतिममहाजवतुरंगमोह्यमानमधिरूढस्यंदनमभिषेणयति विद्याधराधिराजमधिरथं सुनमिम् ।

मंदारमाला—[2]कह एक्कदो सव्वोवि विज्जाहरलोओ एक्कदो अ एक्कल्ल मेहप्पहो । हद्धि हद्धि किं एत्थ होहिइ ।

---

१. किमेषोऽनिष्ठितप्रस्थापितवाणाग्रसंघट्टखंडितवैरिशिरासारस्त्रिभुवनैकरथिक इमसभियुध्यन् कुमारसुकेतु. । २. कथमेकतस्सर्वोपि विद्याधरलोक एकतश्चैको मेघप्रभः । हा धिक् हा धिक् किमत्र भविष्यति ।

**मंथरकः**—कहं समसंधाणमुंचंतहेदिणिवहकवलिदसअलादिसाअक्को विमुक्ककिलकिलासद्दमहुरं झत्ति वद्दरिदं विज्जाहराणं बलं हिअडअंतो णमिणंदणं एव्व अहिजुज्जादि मेहप्पहो ।

**रत्नमाली**—अहो स्थैर्यं वीरव्रतचर्यायां मेघप्रभस्य ।

**मंदरः**—किमुच्यते ।

चरत्यमुष्मिन् बलशौर्यविक्रमै-
र्न राजते कश्चन राजते गिरौ ।
हरौ करींद्रक्षतजांबुचूषण-
प्रवृद्धगृध्नावपरे यथा मृगाः ॥ ६७ ॥

**मंदारमाला**—हद्धि हद्धि । अणारदणिसरंदवाणधारापूरंददिट्ठिपहेहि परोप्परणिरंधसंदट्ठेहि महारहाहिट्ठिदेहि रहसहस्सेहि सव्वदिसाअक्कं वेडिओ समं एव्व णमिणंदणो । ण आणे किं एत्थ होहिइ ।

**रत्नमाली**—प्रिये नैतद्रथसहस्र मेघप्रभस्यैवायमधरितालातचक्रभ्रमस्य स्यंदनस्य स्पंदः ।

**मंदारमाला**—अम्हे अच्छेर जं कहिदंपि ण विस्ससंति लोअणाइं ।

**मंथरकः**—अरे किं एदं विअसत्तदापिच्छगुच्छसप्पहो पिक्कलराअजंबू-

---

१ कथं समसधानमुच्यमानहेतिनिवहकवलितसकलादिशाचक्रो विमुक्तकिलकिलाशब्दमधुरं झटित्यवतीर्णं विद्याधराणा बलं हिंडयन् नमिनदनमेवाभियुध्यति मेघप्रभः । २ हा धिक् हा धिक् । अनारतनिस्सरद्बाणधारापूर्यमाणदृष्टिपथैः परस्परनीरध्रसदष्टैर्महारथाधिष्ठितैः रथसहस्रै सर्वदिशाचक्र वेष्टितो सममेव नमिनंदनो न जाने किमत्र भविष्यति । ३ अहो आश्चर्यं यत् कथितमपि न विश्वसत लोचने । ४ अरे किमेतत् विकसत्तापिच्छगुच्छसप्रभः पक्वराजजंबूफलश्यामल नीलकंठकंठप्रभाकर्बुरः अकालोपस्थितबहुलपक्षदोषकृष्ण अंजनधूलीपुंजसदृशः राहुबिंबसहस्रसंपातभीषणः तमिस्रागुहातिमिरोद्गारगभीर सप्तमपातालोदरदुरालोकः प्रसर्पति गगनागणं अंतत एव नमिनंदनस्य ।

फलसामलो णीलकंठकंठप्पहाकव्बुरो अआलोपाढिदबहुलपक्खद्दोसकसणो अंज्जणधूलीपुंजसच्छओ राहुविंबसहस्ससंपादभीसणो तमिस्सगुहातिमिरुग्गारगहीरो सत्तमपाआलोदरदुरालोओ पसप्पइ गअणंअणं अंतदो एव्व णमिणंदणस्स ।

**मंदारमाला**—( सभयं ) हंद्धि हद्धि । किं णेदं ।

**मंदरः**—अहो आश्चर्यम् ।

> **दृश्यते कवलयन्निवक्षणाद्**
> **विश्वमेव सचराचरं जगत् ।**
> **अंधकारनिकरः समुत्पत-**
> **न्निंद्रनीलमणिमेचकच्छविः ॥ ६८ ॥**

**रत्नमाली**-( विभाव्य ) देवि तामसमस्त्रमासूत्रितं सुनमिना ।

अद्य हि—

> **क्षणेन मूर्च्छामिव तामसास्त्र**
> **प्रयच्छतीदं प्रसभं जनस्य ।**
> **तमःप्रभावस्तिमितावकाश—**
> **माकाशमाशाविनिवेशशून्यम् ॥ ६९ ॥**

**मंथरकः**-हुं किं णेदं जुअंतआलजलहरणिवहवरिसिज्जंतजलणजालोलिकरालो धगधगंतघोलिरुज्जलजालाजालजडिलजंतगअणपेरंतो एक्कलोअं दसदिसाअक्कं दंसअंतो सव्वंपि दिट्ठिवहं ओवाहेदि साहाणाहो ।

**मंदरः**—देव पश्य पश्य ।

---

१ हा धिक् हा धिक् । किं नु एतत् । २ हंत किमेतत् युगांतकालजलधरनिवहवर्ष्यमाणज्वलनज्वालावलीकरालो धगधगुद्घूर्णतोज्वलज्ज्वालाजालजटिलितगगनपर्यंतः एकलोकमिव दशदिशाचक्रं दर्शयन् दृष्टिपथमतिवाहयति स्वाहानाथः ।

जनस्याक्ष्णां तीक्ष्णं तिमिरमिव संरोधि तिमिरं
प्रमार्जन्नूर्जस्वी प्रभृत इव सार्जेन रजसा ।
समुत्सर्पज्ज्वालाशतकवलितव्योमपरिधि-
र्विना काष्ठाभेदं पतति शर एतानधिरुहन् ॥ ७० ॥

रत्नमाली—निर्मुक्तमाग्नेयमस्त्रं मेघप्रभेण ।

अत्र हि ।

जनयत्यनेकपानां पाकल इव पावकः परं दवथुम् ।
सूकल इव दुष्टहयः सर्वोस्माद्भिभ्यदुद्भ्रमति ॥ ७१ ॥

मंथरकः—दैक्ख देव कत्थइ चलपडाआवलिवीजिओ हत्थिदग्ध-जालाजालआपुंक्खिओ कत्थइ करिकण्ण आलचालणुत्ताओ घोलरिफुलिंग-आलिंगिओ कत्थइ चलंतजालासिहुड्डामरो कत्थइ वलंतधूमग्गमंधारिओ करितुरअरहिमणुअणिवहविद्दावणो दहइ दहणो इमो पोरवाणं वलं ।

मंदरः—देव पश्य पश्य ।

उत्पुष्यन्नलकास्थिनालविगलन्मज्जाद्रवोद्रेचित—
ज्वालाजालजटाललोलदनलव्यासंगपीडांगकाः ।
प्लोषोत्पिण्डितकंदराविलुठनाकांडस्फुटोत्थापिताः
संत्रासं पिशिताशिनां च विदधत्यद्धा कबंधा अमी ॥७२॥

रत्नमाली—अहो विश्वमश्नाति वैश्वानरः । एष हि ।

---

१ पश्य देव कुत्रचिच्चलपताकावलीवीजित हस्तिदग्धज्वालाजालपुंजित· कुत्र-चित् करिकर्णचालनोत्थापित· घूर्णमानस्फुलिंगकालिंगित· कुत्रचिच्चलज्ज्वालाशिखो-ड्डामर· कुत्रचित् वलद्धूमोद्गमाधकारितः करितुरगरथमनुजनिवहविद्रावणः दहति दहन अयं पौरवाणा वलम् ।

धूमैः शामलयन् प्रलिप्य गगनं निष्ठापयन्नातपं
ज्वालासंततिभिर्नवान् विरचयन् धूम्याभिरंभोधरान् ।
उत्पातोपनकोपरागबहलव्यादेहसंदेहदः ।
सप्तार्चिः कवलीकरोति विलिहन् विंबं सहस्राचिषः ॥७३॥

मंदरः—

मेघप्रभस्यैष जयं ब्रवीति
धूमध्वजः पौरवसैन्यघाती ।
नमेः सुतस्यापि पराजयाय
पतन् ध्वजस्योपरि धूम एषः ॥ ७४ ॥

**रत्नमाली**—कथमकांडवृष्ट्या विधाप्यते सहसा विभावसुः । नूनमुत्सृष्टं वारुणमस्त्रं नमिसूनुना ।

**मंदारमाला**—[१]अह्मो अच्छेरं ।

**रत्नमाली**—

प्रावृट् प्रवर्तयति चारुचलत्कलापा-
नुच्चैश्शिखानातितरां शिखिनः सुखार्द्रान् ।
निर्मूलनिर्दलितधूमशिखाकलापः
प्रावृष्ययात्विह शिखी प्रलयं प्रयातः ॥ ७५ ॥

**मंथरकः**—[२]कहं एसरुप्पदंडधवलसलिलट्ठिसहस्ससंसइदणिस्सेसजलणिहिणिपडणब्भुदो पज्जलंतजंबूणदथोरभासुरविज्जुलिजालजलिलो कज्जल-

---

१ अहो आश्चर्य। २ कथमेष रौप्यदंडधवलसलिलयष्टिसहस्रसंशयितनिश्शेषजलनिधिनिपतनाद्भुतः प्रज्वलज्जाबूनदस्थूलभासुरविद्युज्जालजटिलः कज्जलमषिक्ष्णसरलजलधरनिवहध्रीयमाणसिद्धपथध्वातः संततोच्चरत्स्तनितनिर्घोषभीषणो वज्रपतनमाटितविकटमहीधरशिखरप्राग्भारो निर्भरोद्भ्रातभिसारिकामनोरथसंभाव्यमानसंतमसः प्रवसन्मिथुनहृदयविदारणकरपत्रः प्रवृत्तः वर्षरात्रः ।

मसिकसणसजलजलहरणिवहभरिज्जंतसिद्धपहद्धंतो सतदुच्चरंतथणिदणिग्घोसभीसणवज्जपडणमूडिदविअडमहीहरसिहरपब्भारो णिब्भरुब्भंतझग्गुलीमणरहसंभावणिज्जसंतमसोपसंतामिहुणाहिअआविदारणकरपत्तो पउत्तो वारिसारंतो ।

रत्नमाली—

नभसोऽयं कालत्वं रचयति वहलो वलाहकव्यूहः ।
जठरशिखिकंठकालः कालिमपि करोति नभ एव ॥७६॥

अपि च ।

सौदामिन्य इमा विभांति शिखिनः पूर्वं निगीर्णाश्शिखा
रोमंथायितुमिच्छया मुहुरथोद्गीर्णा इवांभोंधरेः ।
किंचांतःकवलीकृतो जलधरैर्वैश्वानरो दुर्जर-
स्तत्कोडानि विपाट्य वाढमशनिच्छद्मा विनिर्गच्छति ॥ ७७ ॥

मंदरः—कथं प्रावृषमप्यातिशेते वांतरविहितसृष्टिरियं वृष्टिः ।

अद्य हि—

निर्यत्कुरंगनिकुरम्बकरंवितानि
चुंबंति संप्रति कदंबकदंवकानि ।
कादंविनीनिविडनिष्पतदंवुपूराः
कूलंकपोर्मिभरिताः सरितः सरंत्यः ॥ ७८ ॥

रत्नमाली—कथम् ।

रत्याडंवरसोष्मणस्सपुलकं निर्मग्नवक्रेष्वमी
यूनः सोष्मसु कामिनीस्तनतटेष्वासज्जयंतः सदा ।
व्योम्नः सीमसु केतकीसुमनसामच्छाः परागच्छटाः
श्चयत्प्रोषितधैर्यभस्मधवलाः प्रोज्झंति झंझानिलाः ॥ ७९ ॥

कथमसौ रभसोद्वासितसकलजलधरः समुद्वेजयति सैनिकान् कल्पांतपवनकल्पः प्रभंजनः । नूनं व्यापारितं वायव्यमस्त्रं मेघप्रभेण ।

**मंदारमाली**—( सभयम् ) हं किं णेदं ।

**मंदरः**—देव पश्य पश्य

**घनौघं शैलेयं क्रकच इव संते जनकटु-**
**र्हढाघातप्रौढो दलयति तिरश्चीनमृजु च ।**
**हरन् धारासारं प्रसभमथ संचूर्ण्य कणशः**
**पुरस्तादाशानां सपदि पवनोसौ विकिरति ॥ ८० ॥**

**मंथरक**—कहं णिम्मूलपहुट्ठमेहजूहो णिस्सेसप्पमुसिदसलिलधारासारो रहसल्लूरिदधअवडपेक्खोलणपेक्खणिज्जोहेलालूसिदराअच्छतचित्तलिअगअणपरिसरो कडिणासिलाणिट्ठरुप्पादाणिग्घणो णिग्घादणिणादघग्घरघोरघोसुपिडणझिप्पिदसेएणकुहरो वडवडयादि संगरंगणं समीरणो ।

**रत्नमाली**—

**जलदपटलं दूराद्दूरीकृतभ्रममाहृतं**
**पिबति पवनो नूनं वात्यामुखैः प्रविदारितैः ।**
**इदमपि पुनः शंके निर्मूलयन्नयमंबुदान्**
**घनलवमपि प्रावृट् स्वागामिनीषु न लप्स्यते ॥ ८१ ॥**

( विभाव्य ) कथमुपसंहृतमेव चरितार्थमनेन वायव्यमस्त्रं । साधु लोहार्गलाधिपते साधु जानासि निराक्रोशं पराक्रमितुम् ।

**मंदरः**—देव इतः कृतार्थय चक्षुषी ।

---

१. हंत किमेतत् । २. कथंनिर्मूलप्रमृष्टमेघयूथःनिःशेषप्रमुषितसलिलधारासारः रभसोन्मूलितध्वजपटप्रेंखोलनप्रेक्षणीयः हेलापर्यस्तितराजछत्रचित्रितगगनपरिसरःकठिनाशिलानिष्ठुरोत्पातनिर्घृण· निर्घातनिनादघर्घरघोरघोषोत्पीडनवधिरितसैन्यकर्णकुहरः वडवडायति संगरांगणं समीरणः ।

अत्र हि—

तरंगैराघ्नानं रथ इव पितुर्व्यंतरजये
समुद्रं निर्मुद्रं जितमकरसंचाररभसः ।
कुरूणां निर्भिंदन् झटिति मकरव्यूहमधुना
रथः सम्राटसूनोर्विघटयति वेगप्रतिभयः ॥ ८२ ॥

रत्नमाली—( विलोक्य ) कथमभियुक्तौ परस्परेण कौरवपौरवौ ।

मंदरः—कथं प्रतिषिध्य सैन्ययुद्धमेकतुलाघातमेतौ कर्तुं प्रवृत्तौ ।

रत्नमाली—यावदीषदवतारितविमानाः परस्परव्याहारमनयोः शृणुमः ।

( विमानावतारनाटितकेन तिष्ठंति )

मंदरः—कथमित्थमाह पौरवः । अयि कौरव—

म्लेच्छानां समरे कुरोः स्वजनतां तातेन संपश्यता
वीराणां प्रथमेष्वहं प्रथमिका बद्धप्रातिज्ञेष्वपि ।
वध्वा वीररसानभिज्ञभवतो द्राग्वीरपट्टं कृता
कीर्तिस्तां विततोत्थितामपहरत्यद्यार्ककीर्तिः क्रुधा ॥८३॥

मंदारमाला—अंम्हो गरिट्ठा दिट्ठि ठिआ पोरवस्स ।

मंदरः—कथमित्थमाह कौरवः । अपि पैतृकानीकप्रपंचनिरीक्षणप्रक्षीव श्रूयतामयमर्थः ।

शीतांशोरिव तीक्ष्णांशु तव मामुपसर्पतः ।
बाणैः स्पृष्टस्य पक्षस्य प्राणाशा प्रांशु जायते ॥ ८४ ॥

रत्नमाली—अहो स्थैर्यं कुरुकुलकुमारस्य । कथं स कोपोत्सेकमाह पौरवः । रेरे अनिबद्धप्रलापिन् ।

---

१ अहो गरिष्ठा दृष्टिः स्थिता पौरवस्य ।

**अर्ककीर्तिरसावर्कः सोमस्त्वं सोमवंशजः ।**
**अमुमास्कंदतो मूढ तवैव प्रत्युत क्षयः ॥ ८५ ॥**

अपि च ।

रे सन्नतद्धतया विक्रम्य संत्रस्तः किमसि विस्मृतः वाहनिकयुद्धानिषेधनं । ननु तूष्णीमेवास्ते ममेयममर्षिणी सर्वाप्यक्षौहिणी ।

तदद्य—

**शासितुं काममीशस्त्वामेकको मम सायकः ।**
**शोभायै दिक्परीणाहगृहिणी मम वाहिनी ॥ ८६ ॥**

**रत्नमाली**—आहो परुषिकामसहमानः कथं सानुतापमाह कौरवः । अयि स्वयंवरमर्यादाविभेदिन्नखर्वितदुर्विनयगर्वित शोचनीय इदानीं भवादृशैः पुत्रैर्महाराजभरतः ।

कुतः ।

**स्खलन्मरीचिश्चरितादहिंसता—**
**त्तपांसि पाखंडकृदग्रजस्ते ।**
**त्वमर्ककीर्तिः पदवीमकीर्ते—**
**र्गतोसि भिंदन् गृहमेधिवृत्तिम् ॥ ८७ ॥**

**रत्नमाली**—युक्तमाह कौरवः ।

**मंदरः**—कथमवधीरणाधीरमाह पौरवः । अयि मूर्ख प्रक्रांतमपि न स्मरसि न खल्वियमनुनयगोष्ठी । तदिदानीम्—

**नमतु शरसहस्रोद्गारसंरंभभीमः**
**परुषपविनिपातस्फारविस्फारधीरः ।**
**हठविघटितशत्रुक्षत्रियव्यूहबंध—**
**स्समरनिकृतिचंडः सामिकोदंडदंडः ॥ ८८ ॥**

**मंथरकः**—अहो[1] अविलंवसहो सहाओ ।

**मंदरः**—कथमित्थमाह कौरवः । अहो अनात्मनीन न जानास्यात्मानं । अविचारिताचरणनिघ्नो हि पुमानचिरेण विपदुपघ्नतामास्तिघ्नते ।

तदिदानीम्—

येऽमी रथं ते परिवारयंते
भवत्परित्राणकृतोष्टचंद्राः ।
निहन्मि तानेष शरैरमोघै-
स्त्वं तावदात्यक्षसि चेद्युयुत्सताम् ॥ ८९ ॥

**मंदरः**—कथं निहता एव कौरवेणाष्टाभिश्शरैरर्ककीर्तिरथराक्षिणोष्टचंद्राः।

**रत्नमाली**—कथमधुना—

अष्टचंद्रविनिपातविलक्षो
नष्टचंद्रतिथिनिःप्रभ एषः ।
चक्रवर्तितनयस्य रथोद्य
कुंठिताखिलमनोरथ आस्ते ॥ ९० ॥

**मदरः**—कथं पुनरप्याह कौरवः । अयि युयुत्सासमुत्सुक अव्युत्पन्नोसि रणकर्मणि ।

ततश्च ।

इदानीमप्यस्ति त्वयि भरतसूनौ मम घृणा
क्षमाव्युद्वृत्तेषु द्रविणमिह नःपैतृकमिदम् ।
व्रज स्वैरं युद्धात् स्वगृहमथवा प्रेतभवनं
गतिस्तार्तीयीकी न पुनरिह काप्यस्ति भवतः॥९१॥

**रत्नमाली**—अनुकरोति सोमप्रभं प्रशमेन मेघेश्वरः ।

---

१ अहो अविलंबसह. स्वभावः ।

**मंदरः**—कथं क्रोधोद्धतिसापरूयमारूयत्पौरवः ।

> **कथमपि रणं प्रत्यारूयाय स्थिरीकृतजीवितः**
> **क्क पुनरधुना कौरव्य त्वं पलायितुमीहसे ।**
> **उरसि लुठति मे ना सौभाग्यविक्रममदायिनी**
> **मम तु विशिखाः छिंदंत्येते स्वयंवरमालिकाम् ॥ ९२ ॥**

**रत्नमाली**—कथमुपहासोल्लासमाह कौरवः । अहो ते दुष्करकारिता यत्कुसुमान्यपि छेत्तुमातिष्ठसे ।

**मंदरः**—कथं क्रोधोत्सेकमाह पौरवः । किंच रे अनास्थयोपेक्षितविक्रमं गणयसि तन्मुग्धसुकुमार समरविदग्धः ।

> **नायं तोयधरो स्थिरश्चलवपुर्नैतद्धियत्कार्मुकं**
> **नेयं प्रेक्षयणी तटित्प्रलघवो नैतेप्यपां बिंदवः ।**
> **जेताहं भवतोर्ककीर्तिरलघुस्थेमेदमस्मद्धनु—**
> **र्ज्याहानौ विमुखे यमस्य विशिखाश्चैते प्रहारोन्मुखाः॥९३॥**

**रत्नमाली**—अहो परगुणाभ्यसूया पौरवस्य ।

**मंदरः**—कथमवगणनादारुणमाह कौरवः । अयि भो भरतपुत्र साधु शिक्षितोसि नटविभीषिकायां यद्वीररसोदारप्रयोगेष्वसमर्थस्तत्रभवानित्थमेवं विकत्थसे ।

**रत्नमाली**—अहो सरसाणि वीराणां मानावष्टंभसोल्लासानि स्ववाकोवाक्यानि ।

**मंदरः**—कथं क्रोधोत्सेधसंघट्टितभ्रकुटिभीषणफालपीठकठोरमाह पौरवः। अरे दुर्मानमदनोन्मत्तानिर्मर्यादद्दुर्वादमुखरकुरुकुलपांसन वाढमद्य विपर्यस्तप्रकृतिरसि । यत्सुगृहीतनामधेयं तातमप्युपहासविरसं विभाषसे । तत् किं बहुना ।

तातस्त्वैवैकवश्यः स्वजनयति कुरुनित्युपेक्षाप्युदस्ता
ताताधिक्षेपवध्यं मुखकुहरमिदं मृष्यते नार्ककीर्तिः ।
सृक्कप्रांतावलग्नोल्लुठदुभयाशिखाखंडितोर्ध्वाधमूर्धा
भल्लःप्रद्वेषिमल्लःशमयतु तव क्षीवमौखर्यमेषः ॥ ९४ ॥

मंथरकः—हंते विमुक्क एव्व पोरवेण कअंतदाढाकरालधारापेरंतो रभसुप्पडणभीसणसरिल्लो भल्लो ।

मदारमाला—कंह अद्धपहएव्वकोरवेण सहसुम्मोक्खसम्मोढरिदेहि सरणिअरेहि चुण्णिदो सो भल्लो ।

मंदर—न तावन्मात्रमेव केतुदंडाग्रमपि खंडित पौरवस्य । साधु कौरव्य साधु । इत्यमाह च कौरवः । अरे अरे पौरव पश्य पश्य ।

ललद्दंष्टाजिह्वोल्लुठनरचिताक्रंदविरसं
शिरःकेतोरेतन्निपतति पुरस्तात्तव भुवि ।
विमुक्तव्यालोलध्वजपटशिखाकेशनिचयं
मदीयास्त्राच्छिन्नं तव च निधनं भाव्यमुपदिशत् ॥ ९५ ॥

रत्नमाली—कथं सर्वत्राप्यतिशेते कौरवः ।

मंदरः—कथं पुनरप्याह क्रोधसंरंभभैरवः पौरवः ।

रे रे कौरव संप्रति क्षणक्षणं दत्तक्षणो निर्भयः
स्वैरं विक्रमिणां वचांसि पठितान्यावर्तयावर्तय ।
निष्पर्यायविनिष्पतच्छरशतच्छिन्नांश्च पश्य क्षणा-
त्त्वां तूर्णीं कवचं गुणं धनुरिपून् वाहान् ध्वजं सारथिम् ॥९६॥

---

१ हंत विमुक्त एव पौरवेण कृतांतदंष्ट्राकरालधारापर्यंत. रभसोत्पतनभीषणशरवान् भल्लः । २ कथमर्धपथ एव कौरवेण सहसोन्मुक्तसमुद्धृतैः शरनिकरैः चूर्णितः स भल्लः ।

**रत्नमाली**—अहो दुर्भरः प्रतिज्ञाभरः ।

**मंदरः**—इत्थमाह कौरवः ।

संधातुमेकतममुत्सहते पृषत्कं
यावद्भवान् धनुषि वांचितसंप्रहारः ।
अस्मत्पतत्रिमुखलूनतमुस्तवेयं
तावद्द्विधा भवति पश्य शरासनज्या ॥ ९८ ॥

**मंथरकः**—कहं छिण्ण एव पोरवधणुसिंजणी कोरवखुरप्पेण ।

**रत्नमाली**—युगपदेव कौरवस्य प्रतिज्ञा च साधनं संपन्नं ।

**मंदरः**—देव—

पश्य कोदंडदंडोऽयमर्ककीर्तेर्गतौजसः ।
निर्जीवस्तिमितो जातः शत्रुणा समरे हतः ॥ ९८ ॥

**मंथरकः**—कहं झत्थि पोरवरहं आरूढेण गहीदो कोरवेण विलक्खतुह्निको अक्ककित्ति । पलाइदं च समंतदो पोरवबलेण । उत्थिदो अ कोरवस्स जअकोलाहलो पोरवबाहुजुअअवट्टिणा पासेण कहं संणद्धो किं कुणइत्ति आसंकेमि ।

**मंदरः**—कथमात्मन एव मस्तके निपतितोर्ककीर्तेर्दंभदंभोलिः ।

**रत्नमाली**—अहो कौशलं कौरवस्य ।

**मंदरः**—आह च कौरवः ।

---

१ कथं छिन्नैव पौरवधनुर्शिंजनी कौरवक्षुरप्रेण । २ कथं झटिति पौरवरथमारूढेण गृहीतः कौरवेण विलक्षणतूष्णीकः अर्ककीर्तिः । पलायितं च समंततः पौरवबलेन । उत्थितश्च कौरवस्य जयकोलाहलः । पौरववाहुयुगलवर्तिना पाशेन कथं सन्नद्धः किं करोत्याशंके ।

अयमयमिह युद्धाबद्धगर्वोद्धतानां
भुजबलमदभारं स्वैरमद्यावरोप्य ।
नियमयति भुजौ द्वौ भारतस्यार्ककीर्ते-
युधि कुरुपतिसूनुर्मोचयंत्वेतदीयाः ॥ ९९ ॥

**मंथरकः**—सव्वेवि एण्हिं दिव्वअणादिण्णसाहुक्कारोपहारा कोरवेसरस्स उवरि मुंचंति मंजुगुंजंतमहुअराणिअरणिव्विज्जतमअरंदाणिस्संदाणिम्माहिअबहलगुरुपरिमलवासिज्जंतगअणाभोगं विसत्तसंताणमंदारहरिचंदणणमेरुपरिजादभूइट्ठं पुप्फविट्ठिं ।

**मंदरः**—तेन हि वयमपि तथा कुर्मः ।

( सर्वे साधुकारमुखरा पुष्पवर्षं नाटयंति )

**मंदरः**—देव पश्य पश्य ।

सुरकरविनिर्मुक्तां व्यक्तापदानाविकात्थिनीं
वहाति सुमनोवृष्टिं सिद्धाध्वनः पतितां जयः ।
नृपतिषु बहुष्वभ्यर्थ्यैव स्थितेषु जयश्रिया
विदितगुण एवान्यां न्यस्तां स्वयंवरमालिकाम् ॥ १०० ॥

**रत्नमाली**—

परा जयमसौ प्राप्ता कौरवस्य पताकिनी ।
पराजयमसौ प्राप्ता पौरवस्य पताकिनी ॥ १०१ ॥

**मंदरः**—देव पश्य पश्य ।

---

1. सर्वेपीदानीं दिव्यजनादत्तसाधुकारोपहारा कौरवेश्वरस्योपरि मुंचति मंजुगुंजन्मधुकरनिकरनिर्विश्यमानमकरंदनिष्यंदनिर्मायितबहलगुरुपरिमलवास्यमानगगनाभोगं विकसत्संतानमंदारहरिचंदननमेरुपारिजातभूयिष्ठां पुष्पवृष्टिम् ।

कुरुनरपतिपाशानद्धनिष्पंदबाहु-
र्विघटितनिजसैन्यः शोभते नार्ककीर्तिः ।
इयमपि दिवसांतम्लानिपर्यस्तबिंबा
क्षपितकरसहस्रा शोभते नार्ककीर्तिः ॥ १०२ ॥

रत्नमाली—( विलोक्य ) कथमधुना—

कौरव्यहेतुनिहतः प्रतिपक्षभूभृ-
द्वक्षः क्षरत्क्षतजपूरसमुक्षिता क्ष्मा ।
संध्यानुरागकपिशा वरुणस्य चाशा
धत्तः परस्परममू प्रतिबिंबशोभाम् ॥ १०३ ॥

कथं निर्व्यूढसंगरस्संगरांगणाद्विनिवृत्तः कौरवः ।

अद्य च—

मदद्विपानां करवारिसिक्ता
मदांबुसिक्ता हयफेनसांद्राः ।
अमी रणादद्य परागतानां
समीरणाः श्रांतिमपाहरंति ॥ १०४ ॥

मंदारमाला—कहं समत्ता समरजत्ता । [1]

मंदर—देव पश्य पश्य ।

निष्पिष्टद्विषदश्व सांद्ररुधिरव्यालेपताम्यत्कराः
प्रक्षुण्णप्रतिपक्षदंतिपिशितप्रक्लिन्नदंतार्गलाः ।
एते श्रेणिकृता विशंति नगरद्वारावकाशीक्षिणः
प्रोन्मीलन्मणितोरणां रणमुखाद्वाराणसीं वारणाः ॥१०५॥

---

१ कथं समाप्ता समरयात्रा ।

रत्नमाली—यावदिदानीं वयमपि—

प्रगुणरणविमर्दप्रेक्षणप्रीतिबद्धं
प्रतिघटयितुमंहस्सांप्रतं संप्रयामः ।
समवसरणभूमिं पूतकैलासमौलिं
प्रणिहितगणनाथोपस्थितां भूतभर्तुः ॥ १०६ ॥

मंदरकः—यदाज्ञापयति देवः । इति

( निष्क्राताः सर्वे )

इति श्रीहस्तिमल्लेन विरचिते सुलोचनानाटके
कौरवपौरवीयो नाम चतुर्थोऽङ्कः समाप्तः ॥ ४ ॥



# पञ्चमोऽङ्कः ॥ ५ ॥



( ततः प्रविशति कंचुकी )

**कंचुकी**—अहो निर्जरं प्रीणाति ममांतःकरणं विजयेन वर्धमानः परनृपतिमानघस्मरः कुमारमेघेश्वरः ।

तथाहि—

**प्रमदरभसादुद्यद्गद्गद्यते नितरां वचो**
**गुणयति गुरुं गात्रस्यानंदधुर्मम वेपथुम् ।**
**तिरयतितरां बाष्पोत्पीडः प्रमोदहृतोक्षिणी**
**स्वयमपि जरा नूनं जीर्यत्यसौ बहुलीकृता ॥ १ ॥**

सर्वथा भाजनं मंगलानां सुमंगला काशीराजसुता । ( परिक्रम्यात्मानं निर्वर्ण्य ) अहो वैरूप्यं बार्धकस्य ।

**वयांसि वेपथूद्धूतवारबाणच्छलात्स्वयम् ।**
**उड्डीयेव पलायते सोद्वेगं तनुवैकृतम् ॥ २ ॥**

अथवा कुरुनंदनविजयोत्सवदर्शिनः प्रवयस्त्वमपि मे श्रेयसे । यावदहमिहैव स्थित्वा यथा न कोपि प्रवेक्ष्यति तथा द्वारदेशं रक्षामि । ( इति उपविशति )

( ततः प्रविशति प्रतीहारी )

**प्रतिहारी**—दिट्ठिआ सुसंविदो देव्वेण कोरववंसो जदो जेदुण अक्क-

---

१ दिष्ट्या सुसंवृतो दैवेन कौरववंशो यतो जित्वार्ककीर्ति प्रतिनिवृत्तः कौरवेश्वरः। श्रुतं च मया गृहीत्वार्ककीर्ति प्रविष्टो वाराणसीं कौरवेश्वरस्संभावनापुरस्सरं वा राजकुलनिकटे निवेशितो काशीराजेनेति । ततश्च उद्वेलवाल्यफलप्रेरिता आगतास्मि विजयेन वर्धनं देवं कौरवेश्वरं दृष्ट्वा दृष्ट्योत्सुखं लब्धुं । इयं चाग्रतो वाराणसी । यावत्प्रविशामि ।

क्कित्तिं खेमेण पडिणिउत्तो कोरवेसरो। सुदं च मए घेत्तूण अक्ककित्तिं पविट्ठो वाराणसिं कोरवेसरो संभावणापुरसरं वा राअउलणिअडे णिवेसिदो कासीराएणत्ति । तदो अ उव्वेल्लवल्लफलपेलिदा आअदम्हि विअएण वट्टंतं कोरवेसरं दट्ठूण दट्ठीणं सुहं लहिदुं । इयं च अग्गदो वाराणसी । जाव पविसेमि । ( प्रवेशनाटितकेन ) [1]अहो रमणिज्जदा रअणिमुहस्स ।

अज्ज हि—

[2]पउमेसु अद्धाणिम्मीलिदेसु कुमुदेसु ईसिविअसिदेसु ।
पिअइ ईसमअरंदं पयोसपवणो अ भमलआ घडिआ ॥ ३ ॥

तहहि—

[3]ईमा वेला एत्थ विलासिणीणं ।

[4]सत्थो चंदणकद्दमो थणअले तंवूलवासो मुहे
कप्पूरब्भाहिओ अणच्छसरसा कंठं हि कत्थूरिआ ।
णेहोल्ले चिहुरम्मि गल्लिकुसुमाकालाअरुध्दूविए
सोरब्भं तरुणीअणस्स लहदे अंगेसु सोहग्गअं ॥ ४ ॥

किंच । [5]वहूमाणणासपच्चाअअकुसुममहावाणा मअणस्स दोण्णिचअणि-

---

१. अहो रमणीयता रजनीमुखस्य अद्य हि । २. पद्मेष्वर्धनिमीलितेषु कुमुदेष्वीषद्विकासितेषु । पिवतीषन्मकरदं प्रदोषपवनश्च भ्रमराश्च घटिता ३ इयं वेलात्रविलासिनीनां । तथाहि । ४. शस्तश्चदनकर्दम. स्तनतटे तांवूलवासो मुखे, कर्पुराभ्याधिकोअनच्छसरसाकठे हि कस्तूरिका । स्नेहार्द्रे चिकुरे मल्लिकाकुसुमानि कालागरूध्दूपिते, सौरभ्य तरुणी जनस्य लभते अंगेषु सौभागक्यकं ॥ ५ वधूमाननाशप्रत्यायककुसुममहावाणा मदनस्य देर्निचयानिरस्ता एकोत्पातप्राप्तिहतांधकारध्वजावरोहतीव तिमिरावरणनिर्लुप्तवाहुल्यसकुचित गगनागण । आलिंगतीव परस्परं व सरदूरविघटिता आगमिष्यत्सतमसदढदष्टहस्ता:दिशावध्व । दृश्यंते प्रतिक्षणवर्धमानतमोनिवहा' तिमिरवाहिन्य इव रूपिण्य. नगरीवीथ्य । उल्वलति हठतापितमन्मथशरफलाग्राविलोहिता महीगगनांगणतारा: गृहे गृहे दीपिका ।

रत्था एक्कोवाअपत्तिहिअअंधआरधआवरोहंतीव तिमिरावरणणिल्लुक्कवाहल्ल-संकुइअं गअणंगणं । आलिंगंतीव परोप्परं वासरदूरविहाडिदाओ आअच्छ-माणसंतमसदंडदट्ठहत्थाओ दिसावहूओ दीसंति पडिक्खणवड्ढंततमणिवहाओ तिमिरवाहिणीओव्व रूविणीओ णअरवीहिओ उज्जलंति दढताविअमम्म-हतिरिहलग्गविलोहिआओ महीगअणंगणताराओ घरे घरे दीविआओ ( पुरोविलोक्य ) [1]एदं खु समरावसाणसमूसुहणिस्सरंतसुलहपरिअणं महाराअउलं, ता पविसेमि । ( प्रविश्यावलोक्य च ) [2]एसो खु अअओ सो मत्तादो पडिहारट्ठाणे उवविट्ठो चिट्ठादि । जाव इमादो सअलं उत्तंतं उवलहेमि । ( उपसृत्य ) [3]अअअ वंदामि ।

**कंचुकी**—( विलोक्य ) कथं भद्रसेना । स्वस्ति भवत्यै । अथ कुतस्त्वं इयत्या वेलया स्वं देशं परित्यज्यागता ।

**प्रतीहारी**—[4]हरिसेण अ विसादेण अ ।

**कंचुकी**—विप्रतिषिद्धमेतत् । व्याख्यानत एवात्र विशेषप्रतिपत्तिः ।

**प्रतीहारी**—[5]हरिसो दाव कोरवेसरस्स विजआदो

**कंचुकी**—नैतदुन्मंत्रणं विषादहेतुं व्याचक्ष ।

**प्रतीहारी**—[6]चक्कवट्टिसुदस्स अक्ककित्तिणो अदिक्कमेण अच्चाहिदं संकेदि हिअअं ।

**कंचुकी**—युक्तमेवैतत् । किंतु दैवेन पुनरस्मासु प्रसीदता विषादस्थानेपि हर्ष आदिष्टः ।

**प्रतीहारी**—( सहर्षं ) [7]अज्ज किं सच्चं भणासि ।

---

१. एतत्खलु समरावसानसमुत्सुकनिस्सरत्सुलभपरिजनं महाराजकुलं । तत्प्रविशामि । २. एष खल्वार्यः सः मत्तातः प्रतीहारस्थाने उपविष्टः तिष्ठति यावदस्मात्सकलं वृत्तांतमुपलभामि । ३. आर्य वंदे । ४. हर्षेण च विषादेन च । ५. हर्षस्तावत्कौरवेश्वरस्य विजयात् । ६. चक्रवर्तिसुतस्यार्ककीर्तेरतिक्रमेणात्याहितं शंकते हृदयं । ७ आर्ये किं सत्यं भणसि ।

**कंचुकी**—महती सा कथा । उपविश्य श्रूयताम् ।

**प्रतीहारी**—तेर्णं हि विजएण वड्ढंतं कुमारं पेक्खिअ एसा आअच्छेमि ।

**कंचुकी**—भद्रे भद्रसेने निद्रायते इदानी युद्धपरिश्रातो देवः । कथितश्चाहं नंद्यावर्तसौधातकीमात्रपरिजनेन देवेन, दीयतामियमेका रात्रिर्मे निद्रायितस्य । तत्साधु रक्ष्यता द्वारदेश इति ।

**प्रतीहारी**—तेर्णं हि पहोवं जाव देवस्स पडिवालेमि ।

**कंचुकी**—तेर्न हि स्वैरमुपाविश्यताम् ।

**प्रतीहारी**—जँं भवं आणवेदि ( उपविश्य ) अँज्ज वली अं खु मे कोऊहलं समरावसाणादो परं कीरिसो एत्थ उत्तंतोत्ति जाणिदुं । ता भणाहि ।

**कंचुकी**—तेन हि श्रूयताम् ।

**प्रतीहारी**—अँवहिदम्हि ।

**कंचुकी**—युद्धे यदा तावन्निगृहीतार्ककीर्तिः कौरवेश्वरः प्राविक्षद्वाराणसीं तदैव वाराणसीपतिस्सविषादं च ससंभ्रमं चोपसृत्य वैचित्यविधुरोऽवोचत् ।

शोचस्यवाढं चिरजीवितस्य
चिरात्तदेतत्फलमद्य लब्धम् ।
बद्धोऽर्ककीर्तिस्समरे द्विषेति
श्रुतं च दृष्टं च मया यदद्य ॥ ५ ॥

**प्रतीहारी**—मँहाणुभावो कासीराओ जेण अक्ककित्तिणो पराभवं असहमाणो ण गहिज्जदि ।

१. तेन हि विजयेन वर्धमानं कुमारं प्रेक्ष्य एषा आगमिष्यामि २. तेन हि प्रवोध यावद्देवस्य प्रतिपालयामि । ३. यद्भवानाज्ञापयति । ४. आर्य वलीय खलु कौतुहल समरावसानात् परं कीदृशोत्र वृत्तात इति ज्ञातुं । तस्मात् भणस्व । ५. अवहितास्मि । ६. महानुभाव काशीराज येनार्ककीर्तेः पराभवमसहमानो न गृह्यते ।

कंचुकी—एवमेतत् ।

न जातु जामातुरसौ जयस्य
पराक्रमः काशिपतिं धिनोति ।
धुनोति तूच्चैर्यशसोऽर्ककीर्ते-
रकीर्तिरेषा भरतात्मजस्य ॥ ६ ॥

प्रतीहारी—तदो तदो

कंचुकी—एवमेतत् । अथ साधिक्षेपमवोचत् कौरवेश्वरं काशीराजः । यथा ।

वद्धुं भवानात्मन एव बंधुं
नार्हत्यशंकं भरतस्य सूनुम् ।
विमुच्यतामेष तदाशु बंधात्
स मुच्यतां मुग्ध तवापि मोहः ॥ ७ ॥

अथ च ।

सुतोऽयमाद्यो ननु चक्रवर्तिन—
स्सुतावमाने वमतस्स एव हि ।
इति त्वया डिम्भ न हंत चिंतितं
पितुः कुरोर्नानुकरोषि चेष्टितैः ॥ ८ ॥

प्रतीहारी—सिक्खेदव्वं सिक्खिदो देव्वो कासीराएण । तदो तदो ।

कंचुकी—ततश्च पुनरपि काशीराजः पौरवं कौरवं चोद्दिश्य सोपालंभमवोचत् ।

अस्थानाभिनिवेशबद्धसमरोत्साहेन तावत्त्वया
प्रेक्षापूर्वविधायिनापि न कृतं क्षात्रोचितं पौरव ।
मोहादित्थमतिक्रमं विदधता संभावनीये जने
सत्यं कौरव तत्त्वयापि न कृतं यत्ताद्विवेकोचितम् ॥ ९ ॥

---

१. ततस्ततः । २. शिक्षितव्यं शिक्षितो देवो काशीराजेन । ततस्ततः ।

प्रतीहारीः—साहु महाराज साहु सोहणं ते अणुसासणं । तदो तदो ।

कंचुकीः—अत्रांतरे निरवद्यप्रेषितौ विद्याधरदूतौ चिंतागतिमनोगती चक्रवर्तिसकाशादागतौ लेखहस्तौ गगनतलादवतरिष्टाम् ।

प्रतीहारी—कंपदि मे हिअअं कीरिसी एत्थ चक्कवट्टिणो पडिपत्तित्ति ।

कंचुकी—भद्रे मा भैषीः । स खलु दिव्यमानुषः सम्यक् पश्यति ।

प्रतीहारी—( सहर्षं ) अज्ज भणाहि कीरिसो लेहत्थो ।

कंचुकी—आस्तां तावद्विस्तारः । श्रूयतां पुनः कौरवेश्वराय प्रहितस्य लेखार्थस्य सारः ।

प्रतीहारी—कहं विअ ।

कंचुकी—

यथार्ककीर्तिर्विनयात्प्रमाद्य-
न्निरस्ततंद्रं मम शासनीयः ।
तथोत्पथप्रस्थित एष मोहात्
त्वयापि पथ्ये पथि वर्तनीयः ॥ १० ॥

प्रतीहारी—दाणिं खु मे उस्ससिदं हिअएण एरिसा खु महापुरिसा णाम । अज्ज तदो तदो ।

कंचुकी—श्रूयतां च काशीराजाय प्रहितस्य लेखस्यार्थः ।

प्रतीहारी—कहं विअ ।

कंचुकी—

१. साहु महाराज साधु शोभनं ते अनुशासनं । ततस्ततः । २. कंपते मे हृदयं कीदृशी अत्र चक्रवर्तिनः प्रतिपत्तिरिति । ३. आर्य भणस्व कीदृशो लेखार्थः । ४. कथमिव । ५. इदानीं खलु मे उच्छ्वसितं हृदयेन ईदृशाः खलु महापुरुषा नाम । आर्य ततस्ततः । ६. कथमिव ।

यद्युष्माकमसौ वचांसि शिरसाभ्यर्थ्यानि शेषास्थया
व्यामोहादतिलंघतेस्म तदयं पुत्रोऽर्ककीर्तिर्ननु ।
अप्यस्मिन् भवतां न कर्तुमुचितोपेक्षा समीक्षावतां
मंदाज्ञो भवति प्रमाद्यति जने को वा विनेये सुधीः ॥ ११ ॥

ततश्च ।

न द्वेष्टि मेघेश्वरमर्ककीर्ति-
र्मेघेश्वरो द्वेष्टि न चार्ककीर्तिम् ।
यथा सुहृद्भूय विवांतवैरौ
तथा भवद्भिः प्रतिबोधनीयौ ॥ १२ ॥

प्रतीहारः—कहं असाहारणो कासीराए चक्कवट्टिणो बहुमाणो ।[1]

कंचुकी—किमुच्यते काशीराजः खल्वसौ ।

यो हि—

भक्तिं समस्तदुरितापहृतिप्रगल्भां
धत्ते सदैव परमेष्ठिनियोगनिष्ठः ।
व्यामोहसंशयविपर्ययवीतबुद्धि-
स्तत्त्वं विवेचयति सच्चरितैकतानः ॥ १३ ॥

प्रतिहारी—अज्ज बुद्धिगदलेहत्थेण किं पडिवण्णं कासीराएण ।[2]

कंचुकी—किमन्यत् । सबहुमानमभिष्टुतवान् महाराजभरतं । यथा ।

शमं दधानो हृदि योगिदुर्लभं
गुणैः कियद्वा पितुरेष हीयते ।
तदस्य संचिंत्य चरंतु साधव-
स्सुदुष्टवं वृत्तमदुष्टवृत्तयः ॥ १४ ॥

---

१. कथमसाधारणः काशीराजे चक्रवर्तिनः बहुमानः । २. आर्य बुद्धिगतलेखार्थेन किं प्रतिपन्नं काशीराजेन ।

पुनरपि तमुद्दिश्यावोचत् ।

स्वय्येष नस्सार्वजनीनसूनौ
यशस्वतीहात्र न माति हर्षः ।
किमन्यदेते पितरं यथा ते
त्वामात्मशौचाय यथा स्मरामः ॥ १५ ॥

प्रतीहारी—जुत्तं आचक्खिदं कासीराएण । तदो तदो ।

कंचुकी—ततश्च तूष्णीमासीनमर्ककीर्तिं पुनरप्यवोचत् काशीराजः ।
तथा ।

न नागैर्नाप्यश्वैरपरिमितनागाश्च पृतना-
स्समाराध्या यूयं ननु भरतसूनो कतिपयैः ।
धनं चेद्दास्यामस्तदपि न वरं यत्र निधयो
न वाप्यस्तालस्याः सपदि सुवतेऽभीष्टमिह वः ॥ १६ ॥

किंच—

महीखंडं दद्यां यदि तदपि हास्यं यदखिला
मही युष्माकीणा हिमगिरिसरिद्वल्लभमिता ।
न सौहार्दं प्रार्थ्यं नृपककुद युष्माभिरिह न.
परं हि प्रेमाणं प्रथयति पितास्मासु भवतः ॥ १७ ॥

ततश्च युवराज श्रूयतामस्मदभीप्सितम् ।

स्वयंवरे प्राप्य सपुष्पमालां
तया समं यातु जयः स्वदेशम् ।
त्वां रत्नमाला गुणरत्नराशिं
संवाहयत्वर्घ्यमसावनर्घा ॥ १८ ॥

१. युक्तमाचक्षितं काशीराजेन । ततस्ततः ।

**प्रतीहारी**—सोव्वणं[1] जप्पिदं कासीराएण । तदो तदो ।

**कंचुकी**—ततश्च प्रत्याख्यानेनैव कृताभ्युपगममर्ककीर्तिं काशीराजः सादरमात्मन एव रथमारोप्य स्वभवनमनैषीत् ।

**प्रतीहारी**—तदो[2] तदो ।

**कंचुकी**—काशीराजनियोगेन हेमांगदः कौरवेश्वरं राजभवननिकटवर्तिन्यत्र भवने समुचितसमुदाचारपुरस्सरं न्यवीविशत् । अन्यत्तु बलं गृहीत्वा स्कंधावारं गताविरंमदविशारदौ ।

**प्रतीहारी**—तदो[3] तदो ।

**कंचुकी**—अमुष्याश्च रात्रेस्तुर्ययामे कल्पितोर्ककीर्तेः कौतुकबंधः । कौरवेश्वरस्य तु श्वो भविता ।

**प्रतीहारी**—सव्वं[4] कल्लाणं एव्व ।

**कंचुकी**—तदेनां रात्रिं भवत्या रक्षतामाद्यकक्षता यावदहमभ्यंतरकक्ष्यां परितः संचरन्नभिरक्षामि ।

**प्रतीहारी**—जं[5] अज्ज आणवेदि ।

( इति निष्क्रांतौ )

---

१. शोभनं जल्पितं काशीराजेन । ततस्ततः । २. ततस्ततः । ३. ततस्ततः । ४. सर्वं कल्याणमेव । ५. यदार्यः आज्ञापयति ।

## मिश्रविष्कंभः।



( ततः प्रविशत्युपविष्टो राजा नंद्यावर्तश्च )

**राजा**—( आत्मगतं ) भोः चिरादद्य समरव्यतिकरतिरस्कारमनोरथयूथानाघ्राता सन्निधत्ते हृदये हृदयवल्लभासानुरोधम् ।

**तत्प्रार्थयामि घटनाय रणे प्रवृत्ते**
**नैवागसे विघटनापि मनोरथा वः ।**
**लब्धक्षणाः प्रियतमां प्रति हे भवंतः**
**संभूय यत्किमपि संप्रति सूत्रयंतु ॥ १९ ॥**

( चिंतामभिनीय ) अहो स्वैरचारिता दत्तावसराणां मनोरथानाम् । अमी हि—

**आलिंगत्यबलां बलादनुनयव्यापारदूरस्थितां**
**निर्बंधादनुवर्तयंत्यवचनामालापयत्युत्सुकाः ।**
**आजिघ्रंति निरुंधतीमनिभृतं चुंबंति कंपोत्तरां**
**संपातेन मनोरथानदधति व्रीडावकाशानपि ॥ २० ॥**

( सोत्कंठं ) किंच बहुना ।

**स्वैरमद्य युगपद्विनिस्सृतै—**
**स्तामकंपनसुवासिनीं प्रति ।**
**यद्विकल्पितमभून्मनोरथै—**
**स्तन्ममापि वचसां न गोचरः ॥ २१ ॥**

( स्मृतिमभिनीय ) कथमद्यापि सैव हृदये परिवर्तते स्वयंवरयंती काशीराजसुता । यदा खलु—

मनोरथैस्तत्क्षणपूर्यमाणै-
र्निर्यद्भिरंतर्निविडैरिवैतत् ।
अंसद्वयं मे पुलकैः स्फुटद्भिः
प्रत्युत्थितं तत्करलालनाय ॥ २२ ॥

अथवा । कथमंसयोरेवौत्सुक्यं कथयामि । येन—

दूरादहंपूर्विकयोपसृत्य
प्रियाकरस्पर्शरसं जिहीर्षुः ।
ममान्यमप्युत्सुकमंगमंग-
मंसद्वये संक्रमितं तदैषीत् ॥ २३ ॥

अंगीकरोति च न पुनरन्यानि ममाङ्गानि बहुमानः । यतः

तत्पूर्वकं मे स्रजमर्पयंत्या
स्रङ्निर्विशेषेण करद्वयेन ।
नतांसया स्पृष्टमिदं तु नीत-
मुत्तंसतामंसयुगं शरीरे ॥ २४ ॥

प्रियतमास्पर्श इति हि किमप्यन्यत्संपन्नं रसायनमुत्कंठमानस्यांतः-करणस्य ।

तथाहि—

न हारयष्टौ न तुषारवृष्टौ
न चंद्रकांते न च चंद्ररश्मौ ।
ध्रुवं मया जातु चिदन्वभावि
प्रियांगसंस्पर्शसुखस्य लेशः ॥ २५ ॥

किंच । तस्या अपि बिसगुणश्लक्ष्णगुंफनां कुवलयगर्भदलाग्रमालिकां कठिनयति समस्तमार्दवद्रव्यरचितेव तनुर्मृगीदृशः । किंचान्यत् ।

स्रजमुपरि कराभ्यामंसयोरर्पयंत्या
छलचलितवयस्या हस्तसंचारिताभ्याम् ।
मम किमपि रहस्यं कर्णयोरभ्युपेत्य
स्खलितवलयनादच्छद्मनेवाभ्यदायि ॥ २६ ॥

अथवा किमन्यदिह कथ्यते ।

आदाय दाम मयि कौसुममर्पयंत्या
किंचिद्विकुंचनचलाच्छिथिलोत्तरीयम् ।
आक्रम्य पक्ष्मलदृशा कुसुमायुधस्य
बाणैरिव स्फुटमहं परिवेष्टितोस्मि ॥ २७ ॥

( सविशेषौत्सुक्यं ) किं च तस्याः—

स्विद्यदंगुलिगुरुत्रपाजडं
हस्तयुग्ममवशं मदंसयोः ।
स्रस्तमुक्तमधुना स्मृतिं गतं
सस्मितप्रियसखीकरोद्धृतम् ॥ २८ ॥

यदा खलु मे ।

उच्छ्रयसोन्नतशिखरे
प्रस्विद्यत्पुलककृतपुरःसरणे ।
अनुसरणमिवाधत्तां
तस्याः कुचयोरिमे अंसे ॥ २९ ॥

**नंद्यावर्तः**—( विभाव्य । आत्मगतं ) कथमविच्छिन्नश्चिंतासंतानो देवस्य । अहो अदीर्घसूत्रता मदनस्य । यतः सान्निकृष्यमाणोपि प्रणयिनी-समागमसमयो नालममुष्यात्मनोपस्थापनाय । भवतु पृच्छामि । ( प्रकाशं ) देव क्वेदानीं मनः परिभ्राम्यति । यत्तूष्णीमिवास्यते ।

**राजा**—सखे नंद्यावर्त कथं कथयामि ।

करा भ्यामुत्सृज्य स्रजमुपरि संमोहजननीं
बलादंतर्धीरं मम निभृतमाछिद्य च मनः ।
पुरो धैर्यालेपः स च सपदि धौतो दयितया
न विघ्नस्तन्नीतं पुनरथ कियद्दूरमनया ॥ ३० ॥

नंद्यावर्तः—देव किमत्र खिद्यते ? । ननु गतैव स्वयंवरकलहात् प्रभृतिदूयमानया परिसमापितसमरव्यापारं देवमवेक्षितुं कुतूहलिन्या तत्र भवत्या काशीराजपुत्र्या देवपादमूलं प्रति प्रेषिता संकेतस्थानप्रदर्शनाय सौधातकिं गृहीत्वा नवमालिका ।

राजा—अस्त्येतत् । गरीयान् खलु कातरतया समरकर्मण्यत्याहितमस्मासु शंकमानायाः काशीराजदुहितुः परितापः ।

सा हि—

स्वपतिस्वयंवरसमुत्थसंभ्रम-
ग्लपितत्रपाविवृतभूरिसाध्वसा ।
कथमप्यभूत् प्रियतमा न मूर्च्छिता
नवमालिकाकुसुमदामकोमला ॥ ३१ ॥

नंद्यावर्तः—देवेनैतच्छंकास्थानं किं तु देव इति केवलमभूत्काल्याणः परिणामः ।

राजा—सखे अद्यापि तस्याः ।

अंतर्निपीतनयनांबुपरिप्लुतानि
व्रीडाविशेषविधुरव्यपवर्तनानि ।
चेतस्तुदंत्यविदितोपनतप्रमोद—
प्रारंभविघ्नचकितानि विलोकनानि ॥ ३२ ॥

अपि च तस्याः ।

पक्ष्माग्रग्रथितास्त्रबिंदुविसरापर्यंतपातोन्मुखी
प्राप्ता मां मनसाकुलेन न पुनर्भावानुगैश्चेष्टितैः ।
प्रेमव्रीडिततापसाध्वसतमः सपातकपोत्तरं
दृष्टी दृष्टविनष्टसाचि चलना यांत्याः कथं कथ्यते ॥३३॥

आस्तामेतत् । इदं तु कथं वृत्तम् ।

निर्वर्त्य वक्त्रान्मम मंथरे दृशौ
विवर्तयंती वलितत्रिकं मुखम् ।
स्वयं वृणाना यददर्शदन्य—
स्तदप्यहो लग्नमिहैव मे हृदि ॥ ३४ ॥

कथं चिरायते वयस्यसौधातकिः ।

( प्रविश्य )

विदूषकः—[1]एसो म्हि आअदो ।

राजा—वयस्य अपि सुसूत्रं संविधानकम् ।

विदूषकः—[2]वअस्स जस्स एसो सोदाअइ सइवो तस्सवि ते दुक्करं णाम ।

राजा—वयस्य कथय कथं गन संकेतं संगतम् ।

विदूषकः—[3]अत्थि दाव णोमाणिआए सह अहं इदो गदो ।

राजा—अस्ति तत् ।

विदूषकः—[4]तदो इमस्स भवणस्स परोहिडमग्गेण पविट्ठ पमदवणं । तहिं च पुव्वसंकेदिदा पमदवणपालिआ गंधमालिणी णामा दारं पालअंती ठिदा ।

---

१ एषोस्मि आगत । २. वयस्य यस्यैष सौधातकि. सचिव. तस्यापि ते दुष्करं नाम अस्ति तावन्नवमालिकया सह अहं इतो गतः । ३. ततश्चास्य भवनस्य पश्चान्मार्गेण प्रविष्टं प्रमदवनम् । ४ तस्मिंश्च पूर्वसंकेतिता प्रमदवनपालिका गधमालिनी नाम द्वारं पालयंती स्थिता ।

**राजा**—ततस्ततः।

**विदूषकः**—तदो अ दाए सह पमदवणमग्गेण णिहुदणिहुदं सुदूरं गदं। जहिं अहं वि बहुलमहीरुहसाहासहस्ससंवड्ढिदादो अंधआरादो भीदभीदो अंधो विअ णोमालिआकरं ओलंबिअ खलंतचरणजुअलो कहं कहं पि गदो।

**राजा**—ततस्ततः।

**विदूषकः**—पविट्ठं च तदो पच्छाअवउलसहआरपाडलचंपअवेढिअस्स बालुज्जाणस्स मज्झे उम्मिसंतचंदमणिबद्धपाअफलअं णाम। तं च दंसाविअ आअदणं गंधमालिणीए सह आअच्छदेत्ति भणिअ पमदवणपालिआए सह इदो पट्ठाविऊण सअंवि तदो गदा तहिं एव्व तत्तहोदिं कासीअउत्तिं आणेदुं णोमालिआ।

**राजा**—साधु वयस्य साधु। क्वासौ प्रमदवनपालिका।

**विदूषकः**—पमदवणपक्खदुवारे एव्व ठिदा पडिपालेदि।

**नंद्यावर्तः**—सर्वं समंजसं। तदुत्थीयताम्।

**राजा**—यथाह वयस्यः।

(उत्तिष्ठंति)

**नंद्यावर्तः**—आर्य सौधातके आदेशय प्रमदवनमार्गम्।

---

१. ततश्च तया सह प्रमदवनमार्गेण निभृतं सुदूरं गतं। यस्मिन्नहमपि बहुलमहीरुहशाखासहस्रसंवर्धितादंधकाराद्भीतभीत अंध इव नवमालिकाकरमवलंब्य स्खलच्चरणयुगलः कथं कथमपि गतः। २. प्रविष्टं च ततः प्रच्छायवकुलसहकारपाटलचंपकवेष्टितस्य बालोद्यानस्य मध्ये उन्मिषच्चंद्रमणिबद्धपादफलकं कौमुदीगृहं नाम। तच्च दर्शयित्वा आपतनं गंधमालिन्या सह आगच्छतेति भणित्वा प्रमदवनपालिकया सह इतः प्रस्थापयित्वा स्वयमपि ततो गता तस्मिन्नेव तत्र भवतीं काशीराजपुत्रीमानेतुं नवमालिका। ३. प्रमदवन पश्चाद्द्वारे एव स्थिता प्रतिपालयति।

विदूषकः—ईदो इदो ।

( सर्वे परिक्रामति )

राजा—( सोत्कठं आत्मगतं )

अंगकैरमृतसेकसोदरै-
र्मन्मथाग्निमथितस्य ताम्यतः ।
खेलगामिनि विना विलंबिनां
देहि देहि परिरंभणं प्रिये ॥ ३५ ॥

( सोच्छ्वास ) अये द्रष्टव्या स्वैरमद्य मे काशीराजसुता । अथवैते असकृदनुभूतसुलोचनादर्शनसुखे इदमन्यदक्षिणी प्रार्थये ( ससांत्वनं )

हे लोचने पीतमभूद्युवाभ्यां
चिरं प्रियाया वदनारविंदम् ।
पिपास्यमानस्य मयाधरस्य
क्षणं तिरोधानमपि क्षमेताम् ॥ ३६ ॥

यद्वा । प्रियतमासंभावनायामपराद्धे इमे चक्षुषी नूनं पात्रं बहुमानस्य ।

तथाहि—

त्रपा क्रोधो धैर्य विनयमिति वा सैव शरणं
न यांती सा कांता पदमपि युवाभ्यामनुसृतो ।
दृशौ तां चेल्लप्स्ये दृढमथ परिष्वज्य न चिरं
युवाभ्यां दास्यामि स्तनतटपरीणाहविहृतिम् ॥ ३७ ॥

अथवा सुदुर्जये इमे मया लोचने । कुतः ।

कुर्यां यद्युपगूहनं मृगदृशोऽनुच्छ्वासमग्नस्तनं
नन्वस्ति स्फुरिताधरे मम दृशोः स्वेच्छाविहारो मुखे ।

---

१. इत इत. ।

तस्याश्चेदधरं पिबेयमदयं तत्रस्त एवायते
नेत्रे नेत्रविलोभनाय विलुठत्पाठीनपारिप्लवे ॥ ३८ ॥

( स्पर्शं रूपयित्वा ) कथं प्रवृत्ताः एव प्रोषितजनधैर्यभंजननिर्दाक्षिण्या दाक्षिणात्याः प्रभंजनाः । ( सोद्वेगं ) ।

इतश्चोलीचूडाविचकिलघनामोदसुहृदः
सगंधाः कर्णाटीकुचकलशकाश्मीररजसाम् ।
मुहुर्माहाराष्ट्रीवदनमदिराघ्राणसरसा
नभस्वंतः स्वांतं न हि विरहादाहं विदधति ॥ ३९ ।

विदूषकः—( पुरो निर्दिश्य ) एदं पमदवणदुवारअं एसा अ गंधमालिणी[1]

( प्रविश्य )

प्रमदवनपालिका—जेदु[2] कोरवेसरो ।

राजा—भद्रे गंधमालिनि आदेशय मार्गं वालोद्यानस्य ।

गंधमालिनी—इदो[3] इदो ।

( सर्वे परिक्रामंति )

नंद्यावर्तः—( ऊर्ध्वं विलोक्य निर्वर्ण्य च ) कथमधुना गगनांगणरंगं प्रविविक्षोः शशांकशैलूषस्य स्वच्छसुस्निग्धकौशेययवनिकास्तरणश्रियमुद्वहति श्वेतमानः प्राचीमुखे चंद्रिकास्तवकः ।

तथाहि ।

हरिकरिकरनिर्यच्छीकरासारगौराः
पवनविधुतदूर्वाम्भोधिफेनायमानाः ।
अशरणपरिधावद्ध्वांतदत्तावकाशाः
शशधरकरकंदाः सांद्रयंतींद्रकाष्ठाम् ॥ ४० ॥

---

१. एतत्प्रमदवनद्वारक । एषा च गधमालिनी । २ जयतु कौरवेश्वर । ३. इत इतः

राजा—( विलोक्य ) कथमिदानीमाखंडलदिग्वधूमुखमंडनस्य खंडितजनमानखंडनस्य वर्तते वर्धितमकरध्वजाभ्युदयः शीतदीधितेरुदयः ।

तथाहि ।

यच्चंद्रिकासहचरी प्रथमं प्रविष्टा ।
बद्धांधकारहननं गगनैकभागम् ।
रक्तः शनैः प्रविशति स्वयमद्य शंके
संकेतकेलिसदनं तदसौ शशांकः ॥ ४१ ॥

गंधमालिनी—केहं समुग्गदो एस णिस्संरतचंदाअवसंदोहसंबलिददसदिसाभित्तिओ । अणक्खलिदतिविरमसीच्चिक्कणणिम्मोक्खवलक्खिदणक्खत्तकक्खिपेरंतो तुवरंतचेंचुआमणरहविद्धंसणणिस्सासो संसइदविरहिजणजीविदासंसो सम्मोसिदमाणिणीमाणणाससम्माणिददुव्विणीदपणइजणो जणिदजणणअणाणंदो चंदो ।

अज्ज हि—

णिसहणिअडरत्तं रत्तिणाहस्स विंबं
अणुकुणइ थणाण तुंगवेडालआणं ।

१ कथ समुद्गत एप निस्सरच्चंद्रातपसदोहसंवलितदक्षदिशाभित्तिकः । अनास्खलितप्रक्षालिततिमिरमषीपकनिर्मोक्षवलक्षितनक्षत्रकाक्षिकापर्यंत । त्वरमाणाभिसारिकामनोरथविध्वंसननिश्वासः । सशयितविरहिजनजीविताशंस, समोषितमानिनीमाननाशसंमानितदुर्विनीतप्रणयिजनः जनितजननयनानंदश्चंद्र । अद्य हि ।

२. निपधनिकटरक्त रात्रिनाथस्य विंबं
अनुकरोति स्तनाना तुंगव्रीडालयानाम् ।
अतिवहलहरिद्रालेपरज्यता
मदनरसनिधीनां चोलिकातरुणीजनस्य ॥

अथ च ।

नभोमडपिकाविलसत्तारका मौक्तिका धृतिं दधाति ।
विस्तारितचंद्रातपचंदोपकबद्धप्राग्भारः ॥

अइघहलहलद्दीलेवरज्जंतआणं
मअणरसणिहीणं चोलिअज्झाजणस्स ॥ ४२ ॥

अह अ ।

णहमंडविआविलसं–
ततारआ मोत्तिआ दिहं दहइ ।
वित्थारियचंदावह–
चंदोवअवद्धपब्भारा ॥ ४३ ॥

विदूषकः—केहं एण्हिं अदिवाहिदंधआरपाउससमओ । सारिसा-त्थडंतगहगणकुडुंवपरिवारो उद्धन्द्धपेच्छंतलोअलोअणसुहवइत्तओ । विअसंततारआतामरअकुसुमणिअरं ओगाहेदि गअणसरं सिसिरंसुराअहंसो ।

राजा—अहो निरंकुशता शशांकरोचिषाम् ।

तथाहि–

रभसकृतविकाशः काममुक्ताट्टहासः
सुरपथपटवासोऽनल्पकर्पूरधूलिः ।
विशदयति दिगंतानिंदुपादप्रसारः
कलुषयति तु चिंतां केवलं प्रोषितानाम् ॥ ४४ ॥

अथवा पृष्टव्यमेतत् ।

तमस्समस्तं ग्लपयन्नभीषुभि–
र्विभावरीवल्लभ विश्वतोमुखैः ।
तमः किमेतत्स भवानुपेक्षते
प्रवासिनामांतरमात्मनोपि च ॥ ४५ ॥

---

१. कथमिदानीमतिवाहितांधकारप्रावृट्समयः सहसापतद्ग्रहगणकुटुंबपरिवारः ऊर्ध्वोर्ध्वपश्यल्लोकलोचनसुखायितृकः विकसत्तारकातामरसकुसुमनिकरमवगाहते गगनसरः शिशिरांशुराजहंसः ।

यदि वा तिष्ठंतु वराकाः प्रवासिनः स्वशरीरे तु दत्तप्रवेशं तमः किमस्य शोभायै कल्पते । अथवा भवतु विज्ञातं ।

सजलजलदनीलान्विपि पिंषन्मयूखै-
रुडुपतिरमृतांभःपूरगौरैस्तमांसि ।
स्ववपुषि तम एतल्लग्नमुन्मार्ष्टि नासौ
शरणमुपगतानां हिंसिताको नृशंसः ॥ ४६ ॥

नंद्यावर्तः—( विलोक्य )

अयमरालमरालशिशुच्छद-
च्छविरपाकुरुते परितो नभः ।
शशिकरप्रकरः प्रसरन् जगत्
गवलकंठकलालमिदं तमः ॥ ४७ ॥

( निर्वर्ण्य ) अहो सांद्रता चंद्रातपस्य । संप्रति—

रजनिसुरभिभूरिक्षीरनिष्यंदशुभ्रः
किरणपरिकरोसौ रोहिणीवल्लभस्य ।
प्रसृत इव विभाति स्पर्शमात्रेण विघ्नन्
विधुरविरहिदेहान् पारदासारपूरः ॥ ४८ ॥

राजा—

प्रतिफलनमहार्घाः कामिनीनां कुचेषु
प्रतिनवघनसारक्षोदसंदोहसांद्राः ।
किमपि हृदि विकारं कुर्वते सर्वतोऽमी
तरलतुहिनबिंदुस्यंदिनश्चंद्रपादाः ॥ ४९ ॥

कथं प्रत्यासन्ने प्रियादर्शने मुहूर्तमात्रमपि विरहमसहमानस्तपत्येव नः शिशिरांशुः । अयि भोः ।

दुस्सहोपचितमन्मथव्यथा-
नर्थशून्यशिशिरांशुशब्दनः ।
चंद्रपादपतितान् प्रवासिनः
ह्लेपयस्यकरुणः खरैः करैः ॥ ५० ॥

किंच रे—

तपन्ममांगानि शशांक शंके
नावाप्स्यसि त्वं न पुराप्यवापः ।
सुलोचनाया वदनस्य साम्यं
विलोचनैकांतविलोभनस्य ॥ ५१ ॥

अहो कठोरता चंद्रातपस्य ।

तपसि मम किमंगान्यंग चंद्रातप त्वं
प्रकृतितपन यद्वा का कथा मद्विधेषु ।
ननु वहति कलंकाशंकमंतः शशांकः
स्वयमपि भवतैव प्रत्यहं तप्तबिंबः ॥ ५२ ॥

नंद्यावर्तः—देव पश्य पश्य ।

तुलयति सुदृशामसौ शशी
कुचकलशं घनचंदनार्चितम् ।
प्रियविरहविनिर्यदंजन—
द्रवकलुषाश्रुनिपातकर्बुरम् ॥ ५३ ॥

अपर्यनुयोज्याश्च स्वभावा भावानां। कुतः ।

किमपकृतममुष्य चक्रवाकैः
किमुपकृतं तुहिनार्चिषश्चकोरैः ।
व्यथयति विघटय्य चक्रवाकान्
तृषमपहृत्य धिनोति यच्चकोरान् ॥ ५४ ॥

राजा—हंत भोः रोहिणीजीवितेश्वर ।

प्रियाविश्लेषार्ते स्मरविशिखसंपातविधुरे
न नाम त्वं कामं मयि कुरु घृणां मन्मथसख ।
विना हेतोरक्तान्यथ किमिति चक्राह्वमिथुना—
नुदस्यन् विस्रंसाद झटिति विघटय्य व्यथयसि ॥ ५५ ॥

( अन्यतो विलोक्य )

निष्टापद्रुतराजतद्रवखरांश्चंद्रातपान्नीरसान्
किं यूयं पिबथ प्रसारितगलाः स्वैरं चकोरार्भकाः ।
यद्वा तापितरूप्यपिंडपरुषं बिंबं गिलन्नैंदवं
युष्माकं सपरं निसर्गकठिनः स्वर्भानुरेवोपमः ॥ ५६ ॥

यद्वा रूप्यद्रव इत्यपि न पर्याप्तिस्तापस्य । कुतः ।

रूप्यद्रवो भवति नायमितः प्रसर्प—
न्नूष्मायते स पतितः कियतो मुहूर्तात् ।
इंदुर्विलीनतनुरात्मन एव तापात्
ज्योत्स्नी भवत्यपरथा कृत ईदृगौषधम् ॥ ५७ ॥

नंद्यावर्तः—देव पश्य पश्य । परिभ्रश्यदवश्यायलेशग्रथितःपल्लवाश्रस्य संफुल्लमल्लिकावल्लीवेल्लितकंकेलिस्कंधस्य केलिदोहलविलासिनीविभ्रमपरिरंभरससमुज्जृंभमाणकुरबकस्तबककदंबकस्य लंबमानसरससहकारकिसलयविडंबितवनितालतिकरतलसौकुमार्यस्य विक्रीयमाणबहलसौरभसंभावितसमीरणस्य रणरणकविवृद्धिकदर्थ्यमानमानिनीसंतानस्य वसंतवासभवनस्य निरालस्यवार्धितमन्मथप्रमदस्य प्रमदवनस्य परा लक्ष्मीः ।

अत्र हि—

ज्योत्स्नावगाहशिशिरः सहकारगांधि—
र्निष्यंदमानबकुलासववासितोऽसौ ।

वायुर्ददाति विरहन् कमपि प्रमोद-
मामोदमानकुमुदाकरसौरभार्द्रः ॥ ५८ ॥

राजा—

च्योतन्मधुलवनिकरा
निकारसहकारिणोत्र सहकाराः ।
प्रमदाविरहार्तानां
प्रमदवनमिदं प्रमादाय ॥ ५९ ॥

( स्पर्शं रूपयित्वा ) कथमसावपि परितापहेतुरपर एव चंद्रातपो मातरिश्वा । अथवा ।

अंगानि काशिदुहितुर्नवचंद्रकांत-
निष्यंदघृष्टहरिचंदनशीतलानि ।
स्पृष्टानि नैव भवता पवमान नूनं
नोचेदसौ तव कथं परितापभारः ॥ ६० ॥

इत्थं च मे विकल्पयति चेतः ।

इयं तु तप्ता विनिपत्य चंद्रिका
वहंत्यमुष्मिन् पवने घनोष्मणि ।
अयं तु तप्तः सहसावगाहना-
दिहैव चंद्रातपसुर्मुरानले ॥ ६१ ॥

अयं च मे तर्कः ।

केवलं लोकविख्यातां वायोरग्निरिति श्रुतिम् ।
वायुरुष्णो वमन्नग्निं सत्यं सत्यापयत्यसौ ॥ ६२ ॥

अथवा साधु वेदितम् ।

असौ वहन्नेव सुदुस्सहं दह-
न्न देहिनां श्रांतिहरः समीरणः ।

स नूनमूर्ध्वज्वलनं विभावसु—
विहाय तिर्यग्वलनेन वर्तते ॥ ६३ ॥

अथ किमद्यापि दूरस्थैव प्रिया ।

विदूषकः—[1]णं इदं णिअड एव्व वालुज्जाणं। एसु खु तस्स णिअडट्ठिदो विहरणणिम्माणविअडाणिअंवो तुहिणअराकिरणसंभेदपक्खरंतचंदमणिसलिललच्छिणिज्झरदुव्वंतासिसिरसीअरधूलीधूसरिअपेरंतपवणो पल्लविदकोमलदूव्वंकुरं विव मरगअत्थलेसु पलितं विव पोमराअमाणिकुट्टिमेसु, उम्मिसिदं विव वेलुरिअपत्थरेसु किसलइदं विव पवालतडेसु दिण्णं विव फलिहप्पलहेसु गुच्छं विव मतिअतलेसु णिअलच्छणपहाकरंविदं विव महाणीलभूमिसु चंदाअवं दसअंतो केलिरोहणो णाम कीलापव्वदओ।

नंद्यावर्तः—( निर्वर्ण्य ) देव पश्य ।

केलिरोहणमणिस्थलेष्विमा ।
रोहिणीपतिमरीचिपंक्तयः ।
वर्तयंति परिवर्तचित्रिताः
पाकशासनशरासनं भुवि ॥ ६४ ॥

राजा—( निर्वर्ण्य साशंकं )

अत्रसत्रपमकंपनात्मजा
केलिकौतुकहृता किमद्य हि ।
केलिरोहणतटाधिरोहण
मत्करार्पितकरा करिष्यति ॥ ६५ ॥

---

१. नन्विदं निकट एव वालोद्यानं । एष खलु तस्य निकटस्थितो विहरणनिर्माणविकटनितंवो तुहिनकरकिरणसंभेदप्रक्षरच्चन्द्रमणिसलिललक्ष्मीनिर्झरदूयमानशिशिरशीकरधूलिधूसरितपर्यन्तपवनः पल्लवितकोमलदूर्वाकुरमिव मरकतस्थलेषु प्रदीप्यदिवपद्मरामाणिकुट्टिमेषु उन्मिषितमिव वैडूर्यप्रस्तरेषु किसलयितमिव प्रवालतटेषु दीर्णमिव स्फटिकफलकेषु गुच्छमिव मौक्तिकतलेषु निजलक्षणप्रभाकरंवितामिव महानीलभूमिषु चद्रातपं दर्शयन् केलीरोहणो नाम क्रीडापर्वतकः ।

**गंधमालिनी**-ईदोवि एसा वालुज्जाणपरिसरवाहिणी अमरतरंगिणी णाम लीलादिग्घिआ दक्ख देव दिण्णदाणपुण्णपवाहमअक्कपहुज्जला चंद-अंतफलअपवहंतणिज्झरपारीमिलिअउम्मिआ उम्मिसंतकुमुदव्व पडिच्छाआं-तरिअलोआणइ उपगल्लइ अमअतरंगिणी।

**नंद्यावर्तः**—इतोपि दीयतां दीर्घिकापरिसरे दृष्टिः। अत्र हि—

चंचुदष्टवरटाः कलहंसाः
सैकतांततलिमे च शयानाः।
ज्योत्स्नयैव शनकैर्निजशाखा-
शायिताः पुलकयंति मनांसि ॥ ६६ ॥

**राजा**—( निर्वर्ण्य )।

अमृततरंगिणीनिजतरंगसितासिशतैः
शिशिरमरीचिदीधितिनिमीलितपद्मवदना।
सरसीरुहां द्विषन्निति विदारयति प्रकटं
निपतितबिंबमंभसि निशाधिपतिं शतशः ॥ ६७ ॥

**विदूषकः**—एसो इमादा।

( सर्वे परिक्रामंति )

**गंधमालिनी**—एंदं खु महमहिअवहलवउलपरिमलवलइदसअलपमद-वणं। विआसुंमुहकडोरपाडलामअरंदणिम्महिअसरसगंधवंधुरं। णिब्भरवि-

---

१. इतोपि एषा वालोद्यानपरिसरवाहिनी अमृततरंगिणी नाम लीलादीर्घिका। पश्य देव दत्तदानपुण्यप्रवाहमयैकप्रभोज्जला चंद्रकांतफलकप्रहनिर्झरपरिमिलितो-र्मिका उन्मिषत्कुमुदेव प्रतिच्छायातरितलोचनानि उपगृहाति अमृततरंगिणी। २. एष...। ३. एतत्खलु सुगंधिवहलवकुलपरिमलवलयितसकलप्रमदवनं, विका-सोन्मुखकठोरपाटलामकरंदनिर्मथितसरसगंधवंधुरं, निर्भरविकसन्नवमालिकावासितद-शदिशं जृंभमाणपुन्नागमधुरसार्दितमारुतं, अविरलदलत्कुमुदवनप्रच्छदसंछन्नसरो-वरं वालोद्यानं।

अलंतणोमालिआवासिदद्सदिसं । जब्भाअंतपुण्णाअमहुरसतराणाअमारुअं । अविरलदलंतकुमुअवणपच्छदसछण्णसरोवरं वालुज्जाणं ।

नंद्यावर्तः—अहो रमणीयता बालोद्यानस्य । अत्र हि—

आसवैरनिलमार्द्रयत्यमुं
चारु भासुरयतीह केसरः ।
सौरभेण सुरभीकरोत्यसौ
कौमुदीषु सरसीषु कौमुदी ॥ ६८ ॥

राजा—

बकुलतरवः सांद्रप्रोत्सर्पकौसुमसौरभाः
किमपि सुरभीकुर्वंत्येते भ्रमद्भ्रमरं नभः ।
अथ च कथयाम्येतैर्नक्तं दिवं प्रविकस्वरैः
चिरसुरभिभिर्बाढं कालोप्यसौ सुरभीकृतः ॥ ६९ ॥

( अन्यतो विलोक्य ) इतोपि च ।

पाटलीजरठकुड्मलरंध्र-
प्रस्खलद्बहलसौरभलुब्धाः ।
निर्भरं मधुलिहो लिहतेऽमी
धूनिताननममूनि मधूनि ॥ ७० ॥

विदूषकः—भो[1] वअस्स कुदो एदाइ णिब्भलकुसुमिदाइ पाडलाइ वणाअंते । णिअमूलपलंवपरिपक्कखलिदेहि दीहबाहुजुअलपरिरंभणिज्ज-परिणाहेहि पसरंतसुरभिगंधघुराघुराइदजीहेहिं फलसहस्सेहिं दंसणिज्जो उववणालंकारो तुमे पणसो ण वणिज्जादि ।

---

१. भो वयस्य कुत एतानि निर्भरकुसुमितानि पाटलानि वर्ण्यंते । निज-मूलप्रलंबपरिपक्कस्खलितैः दीर्घबाहुयुगलपरिरंभणीयपरिणाहैः प्रसरत्सुरभिगंध-घुरघुरायितजिह्वैः फलसहस्रैः दर्शनीय उपवनालंकार त्वया पनसो न वर्ण्यते ।

राजा—( सस्मितं ) इदं वर्ण्यते ।

कथं पनसकेवलं सुमधुराणि पुष्पैर्विना
फलानि फलता त्वया फलविपाकमूकस्समः ।
चरञ्चटुलचंचरीकचरणाहतोच्चावच–
प्रकीर्णसुमनोरजः पटलपाटलः पाटलः ॥ ७१ ॥

नंद्यावर्तः—शोभनं सुभाषितम् ।

गंधमालिनी—इदं खु अग्गदो कोमुदीघरअं ।

नंद्यावर्तः—आर्य सौधातके अग्रतो भव देवस्य । यावदहमत्रैव प्रतिपालयन् तिष्ठामि ।

विदूषकः—तह करीअदु ।

गंधमालिनी—अहंपि अ इदो सहीणिओए वट्टेमि ।

विदूषकः—तेण हि तुमं अज्जणंदावत्तस्य सहाआ होहि ।

( गंधमालिनी सस्मितं नंद्यावर्तेन सह निष्क्राता )

विदूषकः—इदो इदो पिअवअस्सो ।

( परिक्रामतः )

( ततः प्रविशति सुलोचना नवमालिका च )

सुलोचना—सहि णोमालिए सच्चं एव्व तुए दिट्ठो अक्खदसरीरो अज्जउत्तो ।

नवमालिका—सहि कीस संकेसि ण खु सो तारिसो तदो एव्व सअंवरकलहभीदाए मइ हत्थे तुह दिण्णो भट्टिणा संदेसो । जह । ( संस्कृतमवलंब्य ) ।

१. एतत्खलु अग्रतः कौमुदीगृहम् । २. तथा करोतु । ३. अहमपि च इतः सखीनियोगे वर्ते । ४. तेन हि त्वं आर्यनंद्यावर्तस्य सहाया भव । ५. इत इतः प्रियवयस्यः । ६. सखि नवमालिके सत्यमेव त्वया दृष्टः अक्षतशरीरः आर्यपुत्रः । ७ सखि कस्मात् शंकसे न खलु स तादृशः तत एव स्वयंवरकलहभीताया मम हस्ते तव दत्तो भर्त्रा सदेशः । यथा ।

द्वित्रा घटीर्गमय मां प्रतिपालयंती
कः कौरवं युधि पुमानभियोक्तुमीष्टे ।
तच्चारु हासिनि मनागपि नाम शंका
मा भूदकंपनसुवासिनि मत्कृते ते ॥ ७२ ॥

सुलोचना—कहिदं एव्व तुए किंतु समस्सासमेत्तकंति मए ण विस्ससिदं ।

नवमालिका—जइ ण विस्ससिसि एण्हिं एव्व सअ दठ्ठूण तं विस्ससेहि ।

सुलोचना—सहि णोमालिए जइ सच्चं एव अज्जउत्तो इद आअमिस्सादि कहं किर अग्गदो तस्स चिठेमि ।

नवमालिका—अदिउज्जुए कि इमाए ण कदाइ अवसाणं लज्जाए ।

सुलोचना—तेण हि एसा परितेजेमि लज्जं तुमं पुण तस्सिं आअदे अग्गदो भविअ मं अंतरेहि ।

नवमालिका—( सस्मितं ) अंतरेमि जइ तुमं णिगलं देसि ।

सुलोचना—सहि कीस उवहसोसि । एसा अहं तुह्निका ण देमि तुह उत्तरं ।

नवमालिका—जइ ण मए जप्पसि तेण एव्व वाहिता भणाहि ।

---

१. कथितं एव त्वया । किं तु समास्वासमात्रकमिति मया न विश्वसितम् । २. यदि न विश्वसिसि इदानीं स्वयमेव दृष्ट्वा तं विश्वस । ३. सखि नवमालिके यदि सत्यमेवार्यपुत्र इत आगमिष्यति । कथ किल अग्रतः तस्य तिष्ठामि । ४. अत्युत्सुके किमस्या. न कदाचिदवसान लज्जाया. । ५. तेन हि एषा परित्यजामि लज्जा त्वं पुन. तस्मिन् आगते अग्रतो भूत्वा मा अतरय । ६. अतरयामि यदि त्वं निगलं ददासि । ७ सखि कस्मादुपहससि एषा अहं तूष्णीका न ददामि तवोत्तरम् । ८. यदि न मया जल्पसि तेनैव व्याहृता भणस्व ।

सुलोचना—हला[1] किं मए तस्स अग्गदो जप्पिदव्वंपि।

नवमालिका—णहि[2] णहि जहागदं वाहुडिअ गंतव्वं।

सुलोचना—तेण[3] हि एहि गच्छामि।

नवमालिका—हिअएण[4] भणाहि।

सुलोचना—( सेर्ष्यं ) सहि[5] भएमि तुए सह खणंपि अत्थिदुं।

नवमालिका—मा[6] भआहि सो एव्व दे सहाओ भविस्सदि।

विदूषकः—एदं[7] कोमुदीघरअं। एसा अ तहिं पविट्ठा णोमालिआए सह कासीराअउत्ति।

राजा—( दृष्ट्वा सोत्कंठं )।

उत्कंठानां बीजं-
मनोरथानां परिभ्रमस्थानम्।
हृदयस्य समुच्छ्वसितं
तदिदं मम सपदि सन्निहितुम् ॥ ७३ ॥

वयस्य यावदस्यामेव वकुलपादपच्छायायां वर्तमानाः स्वैरालापमस्याः शृणुमः।

विदूषकः—जं[8] वअस्सस्स रोअदि।

( तत· कुरुत· )

सुलोचना—असमं[9] जसभासिणी एसा अहं तुह पासादो गच्छामि। ( कतिचित्पदानि गच्छति )

---

१. सखि किं मया तस्याग्रत जल्पितव्यमपि। २. नहि नहि यथागतं व्याहृत्य गन्तव्यम्। ३. तेन हि एहि गच्छामि। ४ हृदयेन भणस्व। ५. सखि बिभेमि त्वया सह क्षणमपि आसितुं। ६. मा विभ्यस्व स एव ते सहायो भविष्यति। ७. एतत्कौमुदीगृहं एषा च तस्मिन् प्रविष्टा नवमालिकया सह काशीराजपुत्री। ८. यद्वयस्यस्य रोचते। ९. असमंजसभाषिणि एषा अहं तव पार्श्वतो गच्छामि।

नवमालिका—एसा उण अहं ण णिवारेमि सो एव्व आअदुअ तुमं णिवारेदु।

राजा—सखे अयमवसरः यावदुपसर्पावः।

( उपसर्पतः )

नवमालिका—( दृष्ट्वा ) भट्ट एसा खु पिअसही चिराइद तुम्हेहिंति कुविदा णिग्गच्छेदि। ता णिवारीअदु।

सुलोचना—( सलज्जं सहर्षं च ) अम्हो अज्जउत्तो।

राजा—सरले कृतं कुपितेन। ( हस्ते गृह्णाति )

( सुलोचना सलज्जं मोचयितुमिच्छति )

विदूषकः—कहं वअस्सेण गहिदं वि हत्थं मोएदुं इच्छसि। इमस्स उण बाहुसारं तुम्हाणं विअ तुए जामातुणो अक्ककित्तिणो हत्था पुच्छिअंतु।

राजा—अयि मुग्धे कुतो हस्तमाक्षिपसि। कृतं व्रीडितेन।

इय परिम्लानमृणालकोमला
तवांगयष्टिर्भृशमद्य ताम्यति।
तदेव लज्जाव्यसनं विमुंचती
ममावलम्बस्व करं नितंबिनि॥ ७४॥

विदूषकः—लद्धं मणोरहाणं फलं वअस्सेण अ अत्तहोदीए अ मए उण एक्केण एत्तिअंमि भूइट्ठमिट्ठफले वणे एकंवि फलं ण लद्धं।

---

१ एषा पुनरहं न निवारयामि स एवागत्य त्वां निवारयतु। २ भर्तः एषा खलु प्रियसखी चिरायितं युष्माभिरिति कुपिता निर्गच्छति। ३ अहो आर्यपुत्र। ४ कथं वयस्येन गृहीतमपि हस्तं मोचयितुमिच्छसि अस्य पुनर्बाहुसारं युष्माकमिव त्वया जामातुः अर्ककीर्तेः हस्तौ पृच्छेताम्. ५ लब्धं मनोरथानां फलं वयस्येन च अत्रभवत्या च मया पुनरेकेन एतावन्मात्रे भूयिष्ठमृष्टफले उपवने एकमपि फलं न लब्धं।

**नवमालिका**—( सस्मितं ) अरे बह्मवंधुअ किंसि तुवं फललालस-चवलो मक्कडजाई ।

**विदूषकः**—( सरोषम् ) दासीए दूए किं मं अदिक्खिवासि खल-कुट्टिणी एस गच्छेमि तुज्झ पासादो ( इति सत्वरं गच्छति )

**नवमालिका**—( सत्वरमनुगच्छती ) अज्ज मा कुप्पा एसा तुमं पणवेमि ।

( निष्क्रांताः )

**सुलोचना**—पिअसहि भएमि अहं इह एक्काइणी अत्थिदुं ।

**राजा**—अयि कातरे किमियमेव ते सखी ।

अविरतमहं सेवे रंभोरु विद्यत एव मे
तव चरणयोः श्रांतौ संवाहनेषु विदग्धता ।
सपदि शिरसा श्लाघ्यामाज्ञां वहामि नियोज्यतां
प्रियसखि ममाप्यार्द्रं सख्यं प्रतीच्छ कृतांजलिः ॥ ७५ ॥

( सुलोचना लज्जा नाट्यति )

**राजा**—प्रिये किमिदानीमपि लज्जितव्यं । ( चिबुकमस्याः उन्नमयन् )

समुच्छ्वसत्कैरवकोमलत्विषो-
र्ददातु मोदं तव चंद्रिकामृतम् ।
इदं दृशोरद्य चकोरलोचने
चकोरयूथप्रियकापिशायनम् ॥ ७६ ॥

( सुलोचना सलज्जं मुखं नमयति )

---

१. अरे ब्रह्मबंधुक किमसि त्वं फललालसचपलो मर्कटजातिः । २. दास्याः दूति किं मामधिक्षिपसि खलकुट्टिनी एष गच्छामि तव पार्श्वतः । ३. आर्य मा कुप. एषा त्वां प्रणमामि । ४. प्रियसखि बिभेमि अहं इह एकाकिनी आसितुम् ।

**राजा**—

लब्धं किल प्रियसखी तव दुर्विमोच-
मिष्टं मया त्वमपि मुंच मुहूर्तमेनाम् ।
रंभोरु देहि परिरंभसुखं सकृन्मे
तिष्ठंतु तावदपरे तु मनोरथा नः ॥ ७७ ॥

( नेपथ्ये )

सहि णोमालिए णोमालिए समासण्णो खु भट्टिदारिआए रदणमालाए कोदुअबंधमुहुत्तो । ता सिग्धं भट्टदारिअं आणेहि ।

( प्रविश्य विदूषकेण सह नवमालिका )

**नवमालिका**—सहि एसा हु सरलिआ रदणमालाकोदुअबंधदंसणत्थं अम्हे सद्दावेदि ।

**सुलोचना**—वच्छाए रदणमालाए कोदुअबंधो वट्टदित्ति आपीदं कण्णरसाअणं ।

**नवमालिका**—अण्णेसादि अ तुव महादेवी पहावदी । ता इदो सिग्गं एहि ।

**सुलोचना**—( आत्मगतं ) कहं गंतव्वं ।

**नवमालिका**—भट्टे दाणिं गंतव्वं पिअसहीए अज्ज मुंचेहि कल्लं एव्व णं तुम्हाणं कोदुअबंधो ।

---

१. सखि नवमालिके नवमालिके समासन्न. खलु भर्तृदारिकाया रत्नमालायाः कौतुकबंधमुहूर्तः तस्माच्छीघ्र भर्तृदारिकामानय । २. सखि एषा खलु सरलिका रत्नमालाकौतुकबंधदर्शनार्थं अस्मान् शब्दापयति । ३. वत्साया रत्नमालायाः कौतुकबंधो वर्तते इति आपीत कर्णरसायनं । ४ अन्वेषयति च त्वा महादेवी प्रभावती । तस्मादित शीघ्रमेहि । ५. कथं गंतव्यं । ६. भर्तः इदानीं गंतव्यं प्रियसख्या अद्य मुंच काल्य एव ननु युवयोः कौतुकबंध. ।

विदूषकः—( सहर्षं तुंडं परिमृज्य ) कहं कल्लं एव्व महवि सत्थिवाअणअं भाविस्सदि[1] ।

राजा—भद्रे कान्या गतिः । तथास्तु ।

( निष्क्राता सुलोचना नवमालिका च )

राजा—( सविषादं ) अहो असहनता दैवस्य ।

न वाग्भिः श्राव्याभिः श्रवणयुगमाराधितमिदं
न वक्षश्चाश्लेषैर्निबिडितकुचैः प्रीणितमभूत् ।
न सौहित्यं वांछाप्यधरमधुपानेन गमिता
गता चासौ तूष्णीमहह सहसा हंसगमना ॥ ७८ ॥

विदूषकः—भो[2] वअस्स कल्लं एव्व तुह्माणंपि कोदुअबंधो । ता किंति दाणिं अत्ताण दूमेसि ।

राजा—अहो कातरता हृदयस्य । तथाहि—

श्व एव नः कौतुकबंध इत्यमुं
निशम्य वृत्तांतमिदं तु मे मनः ।
प्रियावियोगव्यथमानमंतरे
दृढं पुनः कौतुकबंधमृच्छति ॥ ७९ ॥

( संतापमभिनीय ) कथं प्रियाविघटनलब्धप्रसरः प्रतनोत्येव यथापूर्वं रजनीचरतिग्मांशुं निशीथिनीनाथः । अथवा किमत्र दाक्षिण्येन ।

त्वमसि शिशिररश्मिः सन्निधौ शीतलांग्या
यदि तदपगमे त्वं दर्शयेरद्य शैत्यं ।
अयि शशधर सत्यं दर्शयिष्यामी तीक्ष्णौ
शिरसि तव शशस्य द्वौ विषाणौ विशंकम् ॥ ८० ॥

---

१. कथं काल्य एव ममापि स्वस्तिवाचनकं भविष्यति । २. भो वयस्य काल्यमेव युवयोरपि कौतुकबंधः । तस्मात् किमिदानीं आत्मानं धूमयासि ।

विदूषकः—( आत्मगतं ) [1]अहो दुप्पारपसराइं कामुअजणस्स आआसपरिदेविआइं ।

राजा—अये प्रचुरप्रतिपक्षसंक्षुण्णा प्रवासिनां प्रवृत्तिः ।

कुतः ।

क्षपानाथः सत्वं क्षपयति करैरुल्मुकखरै-
र्वसत संतापं प्रगुणयति संतर्ज्य शिशिरम् ।
घनामोदाल्लब्धिश्वसितमथनैव श्वसनतः
स्मरः प्रत्याख्यातो विरहिमनसां घस्मर इति ॥ ८१ ॥

विदूषकः—( विलोक्य ) [2]वअस्स समासण्णो पच्चूसो । ता इदो गच्छेमो ।

राजा—( विभाव्य ) कथं विभातप्राया विभावरी ।

तथाहि—

चकोरैर्ज्योत्स्नांभः कियदपि निपीतं परिपतत्
पुटेष्वंभोजानां कियदपि निरुद्धं निमिषदाम् ।
वियोगार्तैः कोकैः कियदपि गतं पक्षविधुतं
विशुष्कं संतप्तास्वथ तनुषु शिष्टं विरहिणाम् ॥ ८२ ॥

सखे क्वेदानीं नंद्यावर्तः ।

( नेपथ्ये )

इतो इतो देवः ।

राजा—( परिक्रमन् विलोक्य )

अयं च किंचित्प्रविसार्य पक्ष
क्षपांतवातक्षणलब्धबोधः ।

---

१ अहो दुष्पारप्रसराणि कामुकजनस्य आकाशपरिदेवितानि । २ वयस्य समासन्न प्रत्यूष । तस्मादितः गच्छावः।

सरोजनीसैकततल्पशायी
हंसीं समाश्लिष्यति राजहंसः ॥ ८३ ॥

( अन्यतोऽवलोक्य )

इयं च रात्रौ विरहव्यथार्ता
कथंचिदासाद्य पतिं निशांते ।
तं सव्यलीकं किल मन्यमाना
मुग्धा मुधा रुष्यति चक्रवाकी ॥ ८४ ॥

इतश्च ।

तिमिरनिकरशत्रोस्त्रस्तवः पद्मबंधो-
श्शरणमिव समेतास्सद्म पद्मोदराणि ।
भ्रमरतिमिरकंदाः प्रोन्मिषद्भ्योऽम्बुजेभ्यः ।
सकरुणमिव मुक्ताः सांप्रतं निःपतंति ॥ ८५ ॥

( निष्क्रांताः सर्वे )

इति श्री हस्तिमल्लेन विरचिते सुलोचनानाटके
संकेतगृहं नाम पंचमोऽङ्कः समाप्तः ॥ ५ ॥



# षष्ठोऽङ्कः ॥ ६ ॥



( ततः प्रविशति प्रतीहार । )

प्रतीहारः—सुविहितं भोः प्रतिभावता काशीपतिना । येन-

तैस्तैश्च समुदाचारैः सुसत्कारपुरस्सरैः ।
न परं मोचितो वधात् पौरवो दुर्ग्रहादपि ॥ १ ॥

किंच ।

अनुपमगुणगूर्वीं रत्नमालां प्रदाय
प्रथमतरममुष्मै सत्कृतिप्रीणिताय ।
भरतपतिरनेन स्वैरमाराधितोऽभूत्
स्वकुलमपि गरिम्णायोजि संबंधसारात् ॥ २ ॥

अपिच ।

जयश्रियो वीक्षणविभ्रमांजनं
द्विषां च कृष्णीकरणं यशःश्रियः ।
मदांबु भूयः क्षरतां महीपतिः
सहस्रमस्मै करिणामदान्मुदा ॥ ३ ॥

किंच ।

अत्याजितत्वरितयानजितश्रमाणां
दत्तानि पंचशतकानि करेणुकानाम् ।
अष्टौ शतानि कलभा. शुभलक्षणाढ्या-
श्चत्वारि सत्वरसलीलगताश्च विक्काः ॥ ४ ॥

अपिच ।

श्लाघ्यावर्ताः पंचधाराभियुक्ताः
सत्त्वोद्रिक्ताः काशिराजेन दत्ताः ।

**प्रांशूच्छ्रायाः षोडशास्मै सहस्रा-**
**ण्याजानेया वाजिनश्चाभिजाताः ॥ ५ ॥**

ततश्च ।

**हृदयंगमामनर्घां**
**स रत्नमालामवाप्य चारुगुणाम् ।**
**अमनुत भरताच्चतुर्दश-**
**रत्नेशादधिकमात्मानम् ॥ ६ ॥**

प्रवृत्तं चेदं जगते हिताय रत्नमालाप्रदानं काशीराजस्य ।

अत्र हि-

**दत्वा किमिच्छकमनेन चिरप्रदानं**
**दौर्गत्यजातमखिलं जगतो निरस्तम् ।**
**दौर्गत्यमीदृशमभूत् सुहिते तु लोके**
**यन्नार्थिनः क्वचिदपि द्रविणेन लब्धाः ॥ ७ ॥**

इत्थं च निष्क्रांतारिभूतायां कार्यपदव्यामद्य पुनः काशिराजः सुलोचनां प्रदित्सति कौरवेश्वराय । आज्ञप्तं च युवराजहेमांगदेन, आर्य महेंद्रदत्त अद्य खलु वत्सायाः परिणयनं । तदिदानीं प्रवर्त्यतां सिद्धायतनेषु महामहः । प्रगुणीक्रियतां च सकलमन्यत् संविधानकमिति । मया च यथाज्ञप्ति सर्वमनुष्ठितं यावदिदानीं युवराजाय निवेदयामि ।

( ततः प्रविशति हेमांगदः । )

**हेमांगदः**—अहो कीर्त्यनुरूपं चेष्टितमपि मेघेश्वरस्य । वाढमिहास्ति न सदृशो हास्तिनपतिना पराक्रमी लोके । येनापवाहितोसौ भरतसुतो दर्पगुरुभरतः । मेघेश्वराय सुलोचनाप्रदानादपि श्लाघ्यं चक्रवर्तिसुताय रत्नमालाप्रदानम् ।

तस्या हि—

चक्रीकृतं येन जये सुराणां
चापं न पृथ्व्याः श्वशुरस्स चक्री ।
भद्रागुणैः श्लाघ्यतमैः सुभद्रा
श्वश्रूश्च विद्याधरलोकसारा ॥ ८ ॥

प्रतीहारः—( उपसृत्य ) जयतु युवराजः ।

हेमांगदः—अपि वर्तितमनुष्ठितम् ।

प्रतीहारः—सर्वं यथानियोगमनुष्ठितम् ।

हेमांगदः—किंच किंच ।

प्रतीहारः—

पंचोपचारचतुराः परमेश्वरस्य
कुर्वंति सर्वजगदभ्युदयाय पूजाम् ।
सूत्राणि कल्मषहराणि पठंति भूयः
संभूय च स्तुतिविशेषविदोऽद्य भव्याः ॥ ९ ॥

हेमांगदः—सर्वं शुभोदर्कं भगवदभ्यर्हणपुरःसरतया ।

प्रतीहारः—इदं चेदानीम्—

प्रलंबलंबूषविभूषितांतै—
र्मुदावितानैरवदातशोभम् ।
हिरण्मयस्तंभविटंकनद्ध—
प्रकीर्णकं राजति राजवेश्म ॥ १० ॥

इतश्च समंततः संचरत्पर्युत्सुकपुरजनसंकुलमंकुरयाति कौतुकं राजकुलं ।

अत्र हि—

सरसबकुलमाला केसराक्लिष्टदष्टैः
कुचकलशविलेपैर्घ्राणमुन्मादयंति ।

मदनमदवदान्या मारुता कामिनीनां
विगलदलकचूर्णोदीर्णरोमांचरम्याः ॥ ११ ॥

इतश्च पुनरासामावर्तमानानि स्वदंते ।

विकसितहसितांशुशीतलानि
प्रतिहसितोच्छ्वसितस्तनांचितानि ।
कलमधुरवचांसि चेष्टितानि
प्रमदसलीलकृतोपगूहनानि ॥ १२ ॥

इतश्च दीयतां चक्षुः ।

स्रस्तोत्तरीयसिचयोन्मिषितस्तनश्रीः
पश्य स्तनांशुकधिया परिभुग्नपक्षा ।
मूर्छान्नखांशुचयसंवलितां करेण
हारप्रभामसकृदाक्षिपतीह मुग्धा ॥ १३ ॥

हेमांगदः—( विलोक्य ) तदिदमलंक्रियते व्रीडितं विभ्रमेण ।

प्रतीहारः—इतोपि-

पश्य प्रयांती मणिकुट्टिमेस्मि-
न्नश्यत्यसौ केसरदाममृद्वी ।
पुष्पोपहारस्खलनासहानि
सीत्कारसिक्तानि शनैः पदानि ॥ १४ ॥

हेमांगदः—( विलोक्य ) अहो श्लाघ्यता सौकुमार्यस्य ।

प्रतीहारः—इतोपि पश्य ।

विलोक्य नीलाश्मतले विलोचने
विनम्रगात्रा प्रतिबिंबिते पुरः ।
विवर्तपाठीनयुगाभिशंकया
निवर्तयत्यन्यत आकुलं पदम् ॥ १५ ॥

हेमांगदः—( विलोक्य ) कमनीयेयं कातरा ।

प्रतीहारः—इतोपि दृश्यताम् ।

आमोदलोलुपमसौ भ्रमरं पतंतं
व्याधुन्वति प्रियसखी कबरीनिवेशात् ।
भग्नेष्वथैनमलकेष्वसमीक्ष्य लीन-
माकाश एव दृशमाकुलयत्यलक्षाम् ॥ १६ ॥

हेमांगदः—( विलोक्य ) अहो चारुता विभ्रमस्य ।

प्रतीहारः—इतोपि पश्य ।

सुनिर्मलस्फाटिकाभित्तिलग्नां
छायां निजां वीक्ष्य सखीति बुध्वा ।
मुग्धा परिष्वज्य मुदा विलक्ष-
स्मितेन सिंचत्यधरोष्ठमेका ॥ १७ ॥

हेमांगदः–( विलोक्य ) सेयं सीमा मौग्धस्य ।

प्रतीहारः–इदं च विलोक्यताम् ।

सख्याः कपोलफलके मुकुरावदाते
संवीक्ष्य कापि निजमाननमायताक्षी ।
चूर्णालका प्रगुणयत्यपकीर्णचूर्णान्
कर्णावतंसकुसुमं च विशेषकं च ॥ १८ ॥

( नेपथ्ये, कलकलानंतरं )

वैतालिकौ–विजयतां हास्तिनाधिपतिः ।

प्रथमः—

क्षरद्धारापूरक्षपितसुरवीथीपरिरया
रयापातभ्रश्यद्भरतपृतनानादरभसाः ।
हृता येनांभोदाः शिखिनि विशिखांतोत्थितशिखे
शिखारत्नं पुंसां स जयति जयः कौरवपतिः ॥ १९ ॥

**द्वितीयः**—

हताः कौलूताद्याः खरसमरसंमर्दमृदिताः
स्थिरारूढग्रंथिर्भरतसुतमानोऽप्यपहृतः ।
यशो येन स्वच्छं मुहुरपहृत सीम सुदिशां
सुहृद्वीरो धीरः कुरुकुलकुमारो विजयते ॥ २० ॥

( उभावाकर्णयतः )

**हेमांगदः**—किमेतत् ।

**प्रतीहारः**—युवराज सोऽयमाक्लृप्तकौतुकस्य प्रवेशः कौरवेश्वरस्य । ( अग्रतो निर्दिश्य ) युवराज इतः समाराधय चक्षुषी ।

लक्ष्मी विलासमणिदर्पणसंनिभेन
राकामृगांकशुचिनातपवारणेन ।
आभाति सातिशयमात्मयशःप्रतान-
शुभ्रेण चामरयुगेन च कौरवेन्द्रः ॥ २१ ॥

**यश्च**—

आनाभिलंबितरलप्रतिबंधशोभी
प्रत्युप्तमौक्तिकहिरण्मयकर्णपत्रः ।
अच्छिन्नचंदनसमालभनावभासी
देहप्रभाकवलिताभरणप्रभो यः ॥ २२ ॥

**हेमांगदः**—( विलोक्य ) अहो औदार्यमाहार्यस्य । आर्य गच्छामस्तातपादांतिकं ।

**प्रतीहारः**—इत इतो युवराजः ।

( परिक्रम्य निष्क्रांतौ )

---

## शुद्धविष्कंभः ।



( ततः प्रविशति यथानिर्दिष्टो राजा सह नंद्यावर्तविशारदाभ्याम् )

राजा—( सौत्सुक्यं आत्मगतं ) अहो रमणीयविषमता नववधूविभ्रमस्य ।

यत्र हि—

करस्पर्शोद्भिन्नैः पुलकमुकुलैः स्वेदसरसैः
परिव्यक्तिः प्रेम्णः प्रणयपरिणामाद्विकसिताः ।
न दृष्टैस्तिर्यग्भिर्न खलु परिरंभैरमृदुभिः
न संजल्पैः स्निग्धैर्न च वदनचंद्रैरुपहृतैः ॥ २३ ॥

इदं च तत्र मोहनमुत्सुकायमानस्य मनसः । यदुत ।

वचः किंचिद्वक्त्रादभिलषति निर्गंतुमसकृत्
स्फुरन्नंतर्लग्नस्थितितदधरोष्ठः स्फुटयति ।
यतेते रज्यंतौ न खलु न दृशौ द्रष्टुमपि न–
त्रपाते रुंधाना चलयति कुतोपि त्वसहना ॥ २४ ॥

किं च तत्र वर्ण्यते ।

प्रत्यालिंगनतोपि यत्र सुखदा स्रस्तावमुक्तौ करौ
वक्त्रेंदोरपहार एव सरसो यत्रोपहारादपि ।
यत्र स्वादुरुदंचतोपि वचसो निश्वास एवाकुलः
सोऽयं प्राणसमासमागमरसः प्राथम्यरम्यक्रमः ॥ २५ ॥

नंद्यावर्तः—इत इतो देवः ।

( परिक्रामंति )

विशारदः—सखे नंद्यावर्त पश्य देवदर्शनलालसस्य पर्युत्सुकतां विलासिनीलोकस्य ।

अत्र हि—

अन्योन्यस्य स्थातुकामा पुरस्ताद्
दृष्ट्वा देवमात्मन्यतृप्ताः ।
सख्यै सख्यै सादरं दर्शयंत्यः
स्वैरं रुंध्य द्वाररंध्रं पुरंध्यः ॥ २५ ॥

अपि चासाम् ।

विकस्मरस्मेरकपोलपाली—
न्यमूनि यूनां नयनामृतानि ।
विभांति विस्फारितवीक्षितानि
मुखानि मुग्धायतलोचनानि ॥ २७ ॥

नंद्यावर्तः–( विलोक्य ) अहो अतिशयिता दर्शनौत्सुक्यस्य ।

न भ्रष्टं कर्णपूरं न चलनपतितं हेमताटंकपत्रं
न स्रस्तं केशहस्तं न गलितकलनं रत्नकांचीकलापं ।
न त्रुट्यंतं च हारं गणयति सुरतव्यत्ययोन्मादितेव
स्त्रीसंसत्संपतंती सपदि कुरुपतिं द्रष्टुमुत्कंठमाना ॥ २८ ॥

विशारदः—सखे इतोपि पश्य ।

मंजीरशिंजितरसानुगतैरियं च
संसज्यमानचरणा गृहकेलिहंसैः ।
देवावलोकनसमुत्सुकचित्तवृत्तिः
स्थातुं न पारयति न त्वरयाभियातुम् ॥ २९ ॥

नंद्यावर्तः—( विलोक्य ) कथमायासिता तुलाकोटिभ्यां हंसगामिनी !

विशारदः—सखे इतः पश्यापरं प्रेक्षणीयम् ।

अनया हि—

त्यज्यते सपदि साभ्यसूयया
पीवरस्तनभरावभुग्नया ।
कौतुकत्वरितयानुपातिता
मेखला पदयुगस्य शृंखला ॥ ३० ॥

नंद्यावर्तः—( विलोक्य ) कथं विमनस्का वराकी ।

विशारदः—सखे इतोपि दृश्यताम् ।

असावंसस्त्रस्ते चिकुरनिचये व्यापृतकरा
विमूढैवाक्षेप्तुं विगतमथ संव्यानवसनम् ।
विनिश्वासायस्तस्तनतटलुठन् मौक्तिकसरा
जवादभ्यायाता जनयति दृशोः कामपि धृतिम् ॥ ३१ ॥

नंद्यावर्तः—( विलोक्य ) अहो चारुता चेष्टितस्य ।

विशारदः— इतोप्येताः—

व्यामिश्रान् कलमाक्षतैरविकलैर्व्याविद्धसिद्धार्थका-
नाशीर्व्याहृतिपेशलाः कलगिरः प्रोद्यन्नखांशूज्ज्वलम् ।
लोलद्भिर्नयनांचलैः शवलितान् पत्युः कुरूणां तनौ
लाजानां विकिरंति कोमलहरिद्दूर्वांचितानंजलीन् ॥ ३२ ॥

( अग्रतो निर्दिश्य ) देव पश्य पश्य ।

अवनिपतिपरीतामास्थितो भद्रपीठीं
मनुनिगदितषष्ठोपासकस्थाननिष्ठः ।
प्रमुदितपरिवारस्त्वां प्रतीक्ष्यायमास्ते
प्रणयिजनसनाथः सादरं काशिनाथः ॥ ३३ ॥

राजा—( विलोक्य )

गांभीर्यस्यांभसां राशिं प्रश्रयस्य प्रतिश्रयम् ।
महानुभावमेनं मे तातवत्पश्यतो दृशौ ॥ ३४ ॥

विशारदः—अहो महानुभावता महाराजस्य ।

क्षत्रांकुरेण कुरुणा हरिणा मघोना-
प्येनं पुरा सह निवेषितमभ्यषिंचत् ।
प्रीतो युगादिपुरुषः स्वकरांबुजाभ्या-
मावर्जितैः कनककुंभभृतैः पयोभिः ॥ ३५ ॥

नंद्यावर्तः—एष रत्नमंडपस्य पादफलकमार्गः । तदवधार्य दीयतामितः पादो देवेन ।

( राजा उभाभ्या दत्तहस्तो यथोचितं परिक्रामति )

विशारदः—अहो नु खलु भास्वरकार्तस्वरघनखचितमसृणकुट्टिमस्य समीचीनचीनपट्टसंछन्नजांबूनदस्तभसहस्रसंभृतस्य समुल्लसदुल्लोचपल्लवितरुचिरचंद्रोपलकस्य मंदमारुतविधूयमानचंदनमालालंकृतमणितोरणकनककिंकिणीमुखरितमुखस्य मुखविनिहितविकचनालिकेरकुसुमगुच्छभरितशातकुंभशतोपशोभितस्य नातिप्रौढविरूढमंगलधान्यांकुरनिकरमंजरितरत्नपालिकापालिकंदलितस्य सुविभक्तमुक्तागुणपत्रभंगभंगितरंगितपताकिकापंक्तिपरिष्कृतस्य सविशेषदर्शनीयता रत्नमंडपस्य ।

नंद्यावर्तः—( निर्वर्ण्य ) अपि चात्र ।

हैयंगवीनाहुतिगंधपूतः
कालागुरूणां गुरुरेष धूपः ।
वासेन नासैकरसायनेन
व्यालिंपतीवाद्य निलिंपमार्गम् ॥ ३६ ॥

( तत प्रविशति उपविष्टः सपरिवारो महाराजः प्रतीहारश्च )

राजा—

सकलमखिलतत्त्वोद्बोधनं तत्त्वमाद्यं
हतनिखिलविकल्पं निष्कलं तत्त्वमंत्यम् ।

तदधिगमसकामा योगिनश्चारु तेषां
चरितमिति चतुष्कं मंगलं नः कुषीष्ट ॥ ३७ ॥

**प्रतीहारः**—( अग्रतोऽवलोक्य ) महाराज पश्य पश्य । प्रत्यग्रकौतुकबंधबंधुरनेपथ्यः प्रत्यासीदति परिणयनवेदिकां सोमप्रभसूनुः ।

य एषः—

नवमलयजचर्चासंसृजत्सिद्धशेषा
विशदशदकशोभी शुंभदंभोरुहाक्षः ।
मदनिभृतगजेंद्रोदारखेलप्रयातो
जनयति जनताया नेत्रकौतूहलानि ॥ ३८ ॥

**महाराजः**—( विलोक्य निर्वर्ण्य च ) अहो पैतृकमनुसरति कुमारः ।

तथाहि ।

आत्मा वै पुत्रनामेत्यनुभवपदवीमश्नुतेसौ श्रुतिर्नः
कौरव्यं भव्यमग्रे यदनुकृतिकृतावर्तनं पश्यतो मे ।
तारुण्ये वर्तमानो वयसि शमनिधिर्निर्विशंकं वयस्य-
स्साक्षात्सोमप्रभोसाविति मतिरधुना मन्यते धन्यमेनं ॥३९॥

**नंद्यावर्तविशारदौ**—एष महाराजः यावदुपसर्पामः ( उपसर्पंति )। जयतु महाराजः ।

**राजा**—एष कौरव्यो जयः पूज्यपादानभिवादयते ।

**महाराजः**—वत्स चिरं जीव ।

**प्रतीहारः**—विजयतां कौरवेश्वरः ।

**महाराजः**—भो महेंद्रदत्त किमिदमिदानीं प्रतीक्ष्यते ।

**प्रतीहारः**—महाराज सर्वं सज्जं । पश्य—

पठंति सूक्तानि सदर्भसंस्तर-
प्रणीतहव्याशननव्यवेदयः ।
अमी यथासूत्रहुतानलत्रया-
स्त्रयीविशुद्धाः प्रथमे द्विजन्मनाम् ॥ ४० ॥

अपिच—

शुभ्रग्रहाधिष्ठितकेन्द्रशोभितं
तृतीयषष्ठायगतेतरग्रहम् ।
वदंति जामित्रविशुद्धमत्तनुं
मुहूर्तमह्लायमुहूर्तकोविदाः ॥ ४१ ॥

अमी च ।

समुच्चरत्तूर्यनिनादसांद्रं
प्रासादकुंचप्रतिशब्दमंत्रम् ।
शब्दांतराण्यंतरयत्यमीषा-
मुद्घोषणं मंगलपाठकानाम् ॥ ४२ ॥

इतोपि ।

गृहीतमांगल्यमनोज्ञमंडना-
मिहानयत्यानमिताननांबुजाम् ।
प्रमोदपारिप्लवमंजुजल्पितः
सखीजनः संप्रति भर्तृदारिकाम् ॥ ४३ ॥

( ततः प्रविशति यथानिर्दिष्टा सुलोचना नवमालिका च )

नवमालिका—ईदो इदो पिअसही ।

( यथोचितं परिक्रामतः )

---

१. इत इतः प्रियसखी ।

राजा—( आत्मगतं ) कथं प्राप्तैव प्रिया। ( सापदेशं विलोक्य-सौत्सुक्यमात्मगतं )।

यावन्नैष विशोषमोति परितः कंठं प्रदिग्धच्छदः
कर्पूरव्यतिषंगभूरिसुरभि कस्तूरिकाकर्दम :।
यावन्न स्तनयोरय मलयजक्षोदस्त्यजत्यार्द्रतां
तावत्कौतुकि यद्यदिच्छति मनस्तत्तत्कथं ब्रूमहे ॥ ४४ ॥

इदं च पुनरपरमपत्रपायै धैर्यस्य। यत्किल—

आमुक्तकंकणमधीरदृशः प्रकोष्ठ—
मेष गृहीतुमिममद्य कुतूहली नः।
आमुंचती स्थगितसत्त्वबलावलेपो
रोमांचसंचयमनुस्मरणेन हस्तः ॥ ४५ ॥

नवमालिका—पिअसहि एस महाराओ। जाव पणमेहि।

( सुलोचना प्रणमति )

महाराज.—( परिष्वज्य ) वत्से कल्याणभागिनी भव ( उत्थाय )

प्रत्यासीदति कल्याणि वेला दैवज्ञचोदिता।
प्रसीदति मनश्चैतत्प्रथमं शुभसूचनम् ॥ ४६ ॥

तदिदानीम्। भृंगारस्तावत्।

प्रतीहारः—एष रत्नभृंगारः। ( उपनमयति )

महाराजः—( गृहीत्वा )

इयं मया कौरवकैरवेन्दो
तुभ्यं वितीर्णा गुणरत्नपूर्णा

---

१. प्रियसखि एष महाराज। यावत्प्रणमस्व।

सुलोचना स्वीक्रियतां च तस्याः
स्वयं वृतेन प्रथमं वरेण ॥ ४७ ॥

तदिदानीम्-

वसुधारावर्षिते प्र-
तीच्छतु करप्रदानजलधारम् ।
गृह्णातु च करमस्या
विगणितपृथ्वीकरादानः ॥ ४८ ॥

( राज्ञो हस्ते सलिलधारामावर्ज्य हस्तमस्या अर्पयति )

राजा—( गृहीत्वा । स्वगतं )

चिरेण विस्मारितविप्रलंभः
संभोगशृंगारविशृंखलोऽद्य ।
संकल्पकोट्या निबिडीकृतात्मा
संकल्पजन्मा हृदि माद्यतीव ॥ ४९ ॥

महाराजः—

मूर्तित्रयोद्भूतिविशेषभूता
रत्नत्रयात्मान इमेग्नयो वः ।
छत्राणि चक्राणि च संतु सिद्ध्यै
सिद्धार्चयापादितसंनिधीनि ॥ ५० ॥

अपि च—

यस्य स्वयंभुवो नाभेर्ब्रह्मणो विदुरुद्भवम्
विश्वोत्पादलयध्रौव्यसाक्षी चास्तु शिवाय वः ॥ ५१ ॥

प्रतीहारः—

आकाशं मूर्त्यभावादघकुलदहनादग्निरुर्वी क्षमातो
नैस्संग्याद्वायुरापः प्रगुणशमतया स्वात्मनिष्ठैः सुयज्वा ।

सोमः सौम्यत्वयोगाद्रविरिति च विदुस्तेजसां सन्निधाना-
द्विस्वात्मातीतविश्वः स भवतु भवतां भूतये भूतनाथः ॥ ५२ ॥

महाराजः—इयं च ते वत्स निसर्गसिद्धेष्वर्थेषु क्षत्रियोचितमाचरितुं पुनरुक्तमाशास्महे ।

चतुर्न्यायी वृत्तः कुलमनघमव्याकुलमव—
न्निहामुत्रापायादमलगुणमात्मानमव च ।
प्रजाः स्वास्त्रायस्व स्वमिव कुमतादूषितमतिः
परं सामंजस्यं भज सदसतां रत्यरतिदम् ॥ ५३ ॥

राजा—एष गृह्णामि पूज्यपादस्य शिक्षाम् ।

नंद्यावर्तः—राजर्षे इयमस्माकं विज्ञप्तिः ।

मनुः प्राजापत्यः प्रथमतरमेतद्युगमुखे
चरित्रं क्षत्रार्हं यदवददधीति श्रुतिशते
अमुष्मिन् निस्तंद्रः कुरुपतिरसौ साधु चरितं
तथाप्येषा शिक्षा स्थिरयति परं प्रीणयति च ॥ ५४ ॥

विशारदः—राजर्षे साधु विज्ञप्तममुना । किंच ।

पुष्णंति कामितविशेषमनीषितार्थ-
मापादयंति दुरितापगमं जनस्य ।
युष्मादृशां प्रशमपूतसमाधिभाजा-
माज्ञाक्षराणि शिरसा पठितानि तानि ॥ ५५ ॥

महाराजः—महाभाग किं ते भूयः प्रियमुपहरामि ।

राजा—

संबंधमीदृशमपास्य नवीकृतोसा-
वस्मास्वनल्पशुभपंक्तिरनुग्रहो वः ।

प्राप्तो मनोरथपदाभ्यधिकः प्रमोदो
भूयं प्रियं मम किमस्ति गवेषणीयम् ॥ ५६ ॥

तथाप्येतद्भवतु ।

भूयाद्भूतेषु धर्मप्रकृतिरसुवतां निष्प्रकंपानुकंपा
धर्म्यै पात्रे विसृष्ट्यै व्ययनियतिवशादार्जयंत्वर्थमार्याः ।
संतानस्थापनायै विदधतु गृहिणः कामखेदापनोदं
चेष्टंतां चात्मनीना निरुपधिशुचये मोक्षसौख्योदयाय ॥ ५७ ॥

महाराजः—एवमस्तु ।

वयं च—

संवित्प्रकाशकौटस्थ्यमयीं मायातिलंघिनीम् ।
अपवर्गस्य पदवीं त्रयीमाराधयामहे ॥ ५८ ॥

( निष्क्रांताः सर्वे )

इति श्रीगोविंदभट्टस्वामिनः सूनुना श्रीकुमारसत्यवाक्यदेवरवल्लभोदय-भूषणानामार्यमिश्राणामनुजेन कवेर्वर्द्धमानस्याग्रजेन कविना हस्तिमल्लेन विरचितः कौतुकबंधो नाम षष्ठोऽङ्कः समाप्तः ॥ ६ ॥

13506



# ग्रंथकारस्य प्रशस्तिः ।



श्रीमूलसंघव्योमेंदुर्भारते भावितीर्थकृत् ।
देशे समतभद्राख्यो मुनिर्जीयात्पदर्धिकः ॥ १ ॥

तत्त्वार्थसूत्रव्याख्यानगंधहस्तिप्रवर्तकः ।
स्वामी समंतभद्रोऽभूद्देवागमनिदेशकः ॥ २ ॥

अवटुतटमटति झटिति
स्फुटपटुवाचाटधूर्जटेर्जिह्वा ।
वादिनि समंतभद्रे
स्थितवति सति का कथान्येषाम् ॥ ३ ॥

शिष्यौ तदीयौ शिवकोटिनामा
शिवायनः शास्त्रविदां वरेण्यौ ।
कृत्स्नश्रुतं श्रीगुणपादमूले
ह्यधीतवंतौ भवतः कृतार्थौ ॥ ४ ॥

तदन्वयेऽभूद्विदुषां वरिष्ठः
स्याद्वादनिष्ठः सकलागमज्ञः ।
श्रीवीरसेनोऽजनि तार्किकश्रीः
प्रध्वस्तरागादिसमस्तदोषः ॥ ५ ॥

यस्य वाचां प्रसादेन ह्यमेयं भुवनत्रयम् ।
तच्छिष्यप्रवरो जातो जिनसेनमुनीश्वरः ॥ ६ ॥

यद्वाङ्मयं पुरोरासीत्पुराणं प्रथमं भुवि ।
तदीयप्रियशिष्योऽभूद्गुणभद्रमुनीश्वरः ॥ ७ ॥

शलाकाः पुरुषा यस्य सूक्तिभिर्भूषिताः सदा ।
गुणभद्रगुरोस्तस्य माहात्म्यं केन वर्ण्यते ॥ ८ ॥

यस्य वाक्सुधया भूमावभिषिक्ता जिनेश्वराः ।
तच्छिष्यानुक्रमायाते संख्येयो विश्रुतो भुवि ॥ ९ ॥
गोविन्दभट्ट इत्यासीद्विद्वान्मिथ्यात्ववर्जितः ।
देवागमनसूत्रस्य श्रुत्या सद्दर्शनान्वितः ॥ १० ॥
अनेकांतमतं तत्त्वं बहु मेने विदांवरः ।
नंदनास्तस्य संजाता वर्द्धिताखिलकोविदाः ॥ ११ ॥
दाक्षिणात्या जयंत्यत्र स्वर्णयक्षीप्रसादतः ।
श्रीकुमारकविः सत्यवाक्यो देवरवल्लभः ॥ १२ ॥
उद्यद्भूषणनामा च हस्तिमल्लाभिधानकः ।
वर्धमानकविश्चेति षडभूवन् कवीश्वराः ॥ १३ ॥
श्रीमद्विपंगुडीशः कुशलवरचितः स्थानपूज्यो वृषेशः
स्याद्वादन्यायचक्रेश्वरगजवशकृद्धस्तिमल्लाद्वयेन ।
गद्यैः पद्यैः प्रबंधैर्नवरसभरितैराद्दतोऽयं जिनेशः
पायान्नः पादपीठस्थलविकटलसत्पांड्यमौलिप्रभौघः ॥ १४ ॥

इति प्रशस्तिः ।

समाप्तमिदं नाटकम् ।

# पूर्वप्रकाशित ग्रन्थ।



**१ लघीयस्त्रयादिसंग्रह**—इसमें भट्टाकलंकदेवकृत लघीयस्त्रय सटीक, आचार्य अनन्तकीर्तिकृत लघु सर्वज्ञसिद्धि और बृहत्सर्वज्ञसिद्धि, तथा अकलंकदेवकृत स्वरूपसम्बोधन इन चार ग्रन्थोंका संग्रह प्रकाशित हुआ है। मूल्य ।=)

**२ सागारधर्मामृत सटीक**—पण्डित प्रवर आशाधरका यह प्रसिद्ध ग्रन्थ उनकी भव्यकुमुदचन्द्रिका टीका सहित छपा है। मूल्य ।≡)

# प्रकाशित होनेवाले ग्रन्थ।

**४ पार्श्वनाथ चरित**—महाकवि वादिराज सूरीकृत मू० ।≡)

**५ मैथिलीकल्याण नाटक**—कवि श्रीहस्तिमल्लकृत मू० ≡)

**नोट**—ग्रन्थमालाके सब ग्रन्थ बम्बईके सब जैन बुकसेलरोंके पास शोलापुर जैन बुकडिपोमें और दिगम्बर जैन पुस्तकालय सूरतमें मिल सकेंगे।

निवेदक—

**नाथूराम प्रेमी,** मंत्री

हीराबाग बम्बई।

# प्रार्थनायें।

१ इस ग्रन्थमालाका प्रत्येक ग्रन्थ लागतकी कीमतपर वेचा जाता है। ग्रन्थोंका उद्धार और प्रचार करना ही इसका उद्देश्य है। अतः प्रत्येक धर्मात्माको इसकी सहायता करना चाहिए और अपने मित्रोंसे कराना चाहिए।

२ ग्रन्थमालाके लिए जो फण्ड हुआ है वह वहुत ही थोड़ा अर्थात् लगभग चार हजार रुपया है पर यह काम इतना वड़ा है कि इसके लिए कमसे कम ५० हज़ारका फण्ड ज़रूर होना चाहिए। इसलिए इसके फण्डकी रकम वढ़ानेकी ओर प्रत्येक धनीका लक्ष्य रहना चाहिए।

३ धर्मात्माओंको इसके प्रत्येक ग्रन्थकी कमसे कम २५ प्रतियोंके स्थायी ग्राहक वन जाना चाहिए। यदि पच्चीस पच्चीस प्रतियाँ लेनेवाले सिर्फ २० और दश दश प्रतियाँ लेनेवाले सिर्फ ५० ही ग्राहक इसके जम जायँ, तो इसके द्वारा सैंकडों ग्रन्थोंका उद्धार सहज ही हो सकता है। ग्रन्थोंकी कीमत वहुतही कम होती है, इस कारण उनकी दश पच्चीस प्रतियाँ खरीद लेना साधारण गृहस्थोंके लिए भी कुछ कठिन नहीं है।

४ कमसे कम २५० प्रतियाँ खरीदने वालोंका फोटो और स्मरण पत्र इसके ग्रन्थोंमें लगाया जा सकता है, अतः इस ओर भी धनियोंको ध्यान देना चाहिए। ऐसा करनेसे धर्म और कीर्ति दोनोंकी साधना हो सकती है।

५ व्याह शादी, जन्मोत्सव, प्रतिष्ठा, आदि प्रत्येक आनन्द कार्योंमें दान करते समय प्रत्येक जैनीको इस संस्थाका स्मरण रखना चाहिए और शक्तिके अनुसार जितनी वन सके उतनी सहायता इसकी करना चाहिए।

हीरावाग पो. गिरगाँव–वम्बई ] [ प्रार्थी–नाथूराम प्रेमी–मंत्री।

# माणिकचन्द दिगम्बर-जैनग्रन्थमालाकी नियमावली।



१—इस ग्रन्थमालामें केवल दिगम्बर जैन सम्प्रदायके संस्कृत और प्राक्रतिक भाषाके प्राचीन ग्रन्थ प्रकाशित होंगे। यदि कमेटी उचित समझेगी तो कभी कोई देशभाषाका महत्त्वपूर्ण ग्रन्थ भी प्रकाशित कर सकेगी।

२—इसमें जितने ग्रन्थ प्रकाशित होंगे उनका मूल्य लागत मात्र रक्खा जायगा। लागतमें ग्रन्थ सम्पादन कराई, संशोधन कराई, छपाई, बंधाई आदिके सिवाय आफिस खर्च, व्याज और कमीशन भी शामिल समझा जायगा।

३—यदि कोई धर्मात्मा किसी ग्रन्थकी तैयार कराईमें जो खर्च पड़ा है वह, अथवा उसका तीन चतुर्थांश, सहायतामें देंगे तो उनके नामका स्मरणपत्र और यदि वे चाहेंगे तो उनका फोटू भी उस ग्रन्थकी तमाम प्रतियोंमें लगा दिया जायगा। जो महात्मा इससे कम सहायता करेंगे उनका भी नाम आदि यथायोग्य छपवा दिया जायगा।

४—यदि सहायता करनेवाले महाशय चाहेंगे तो उनकी इच्छानुसार कुछ प्रतियाँ जिनकी संख्या सहायताके मूल्यसे अधिक न होगी मुफ्तमें वितरण करनेके लिये देदी जायंगीं।

५—इस ग्रन्थमालाकी कमेटी द्वारा चुने हुए ग्रन्थ ही प्रकाशित होंगे।

पत्रव्यवहार करनेका पता—

नाथूराम प्रेमी,

हीराबाग, पो. गिरगांव, बम्बई।

# माणिकचन्द-दिगम्बरजैनग्रन्थमालासमिति ।

( प्रबन्धकारिणी सभाके सभ्य )



१ राय बहादुर सेठ स्वरूपचन्द हुकुमचन्द ।
२ „ „ „ तिलोकचन्द कल्याणमल ।
३ „ „ „ ओंकारजी कस्तूरचन्द ।
४ सेठ गुरुमुखरायजी सुखानन्द ।
५ हीराचन्द नेमिचन्द आ० मजिस्ट्रेट ।
६ मि. लल्लूभाई प्रेमानन्द परीख एल्. सी. ई. ।
७ सेठ ठाकुरदास भगवानदास जौंहरी ।
८ ब्रह्मचारी शीतलप्रसादजी ।
९ पं. धन्नालालजी काशलीवाल ।
१० पं. खूबचन्दजी शास्त्री ।
११ नाथूराम प्रेमी ( मंत्री )

---